॥ श्रीवरदराजाचार्यविरचिता ॥

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# लघुसिद्धान्तकौमुदी

लघुकौमुदी के ३५ संस्करणों पर आधारित रंगीन संस्करण

कृदन्ते

## कृत्यप्रक्रिया पूर्वकृदन्तम् उणादयः उत्तरकृदन्तञ्च

इस विषय के शोधपूर्ण सरलव्याख्यान पद्धति पर आधारित वीडियो हमारे चैनल पर उपलब्ध हैं।

**परामर्शकौ**

प्रो. ब्रजभूषणओझा

प्रो. नीलाभतिवारी

इन स्लाइड्स के माध्यम से पढ़ने के लिए अथवा इनकी व्याख्या देखने के लिए हमारे चैनल का अनुसरण करें।




YouTube संस्कृतसारः @sanskrit sar

**प्रस्तोता**

डॉ. श्रीओमशर्मा (व्याकरणविद्याशाखा)

केन्द्रीयसंस्कृतविश्वविद्यालयः, श्रीरघुनाथकीर्तिपरिसरः देवप्रयागः (उत्तराखण्डः)

# निवेदनम्

यह पठन-पाठनसामग्री 'संस्कृतव्याकरण' में शीघ्र प्रवेशेच्छुक-छात्राध्यापकों के हेतु 'संस्कृतसारः' इस समाजसेवी संस्था द्वारा संस्कृतभाषा की सेवार्थ प्रस्तुत की जा रही है। अतः आपसे निवेदन है कि इन 'लघुसिद्धान्तकौमुदी' स्लाइड्स् व वीडियोज् का अपने पठन-पाठन में पर्याप्त उपयोग कर संस्कृत की सेवा में हमारा सहयोग करें। इन स्लाइड्स् को शुद्धतम बनाने का प्रयास करने पर भी ऐसा सम्भव है कि इसमें कहीं त्रुटि रह गयी हों अतः उनके सुधार के लिए हमें ईमेल द्वारा सूचित करें।



दिनाङ्कः-

03.01.2023

अस्माकं सम्पर्कसूत्राणि—

e-mail अणुवाक्— samskritsaarah@gmail.com

YOUTUBE — संस्कृतसारः @sanskrit sar

FACEBOOK— @sanskrit_shiksha संस्कृतशिक्षा

निवेदकः-

संस्कृतशिक्षा-परिवारः

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# कृदन्तप्रत्ययानां सामान्यबोधः

लघुसिद्धान्तकौमुद्याम् (कृदन्ते कृत्यप्रक्रिया)

{मूलपाठः}

❖ द्वितीयधात्वधिकारसूत्रम्—

**सूत्रम्—** धातोः (३,१.९१)

**अर्थः—** आतृतीयाध्यायसमाप्तेर्ये प्रत्ययास्ते धातोः परे स्युः। 'कृदतिङि'ति कृत्संज्ञा॥

धातोः
- तिङ्- १८
- कृत्- १२७

कृत् येषामन्ते ते कृत्+ अन्ताः= कृदन्ताः

## कौमुदीकृता कृदन्तप्रत्ययानां विभाजनम्—

**१.कृत्यप्रत्ययाः**

१.तव्यत् २. तव्य ३. अनीयर् ४.केलिमर् ५.यत् ६.ण्यत् ७.क्यप्

**२.पूर्वकृदन्तप्रत्ययाः**

१.ण्वुल् २. तृच् ३. ल्यु ४.णिनिँ ५.अच् ६.क ७.अण् ८.ट १०.खश् ११.खच् १२. मनिँनादयः १३. क्विँप् १४. क्वनिँप् १५.ड १६./१७. क्त, क्तवतुँ १८.कानच् १९.क्वसुँ २०/ २१.शतृ, शानच् २२.तृन् २३. षाकन् २४.उ २५.ष्ट्रन् २६.इत्र

**३.उणादिप्रत्ययाः**

१.उण्

**४.उत्तरकृदन्तप्रत्ययाः**

१.तुमुँन् २. ण्वुल् ३. घञ् ४.अच् ५.अप् ६.क्त्रि ७.मप् ८.अथुच् ९.नङ् १०. नन् ११.कि १२.क्तिन् १३. क्विँप् १४.अ १५.युच् १६.क्त १७.ल्युट् १८.घ १९.खल् २०.क्त्वा २१.णमुँल्

# कृदन्तेऽसरूपापवादविषयको नियमः



{मूलपाठः}

❖ असरूपापवादविषयकं परिभाषासूत्रम्—

**सूत्रम्— वाऽसरूपोऽस्त्रियाम् (३,१.९४)**

अर्थः— अस्मिन्धात्वधिकारेऽसरूपोऽपवादप्रत्यय उत्सर्गस्य बाधको वा स्यात्, स्त्र्यधिकारोक्तं विना॥

❖ कृत्यसञ्ज्ञाधिकारसूत्रम्—

**सूत्रम्— कृत्याः (३,१.९५)**

अर्थः— ण्वुल्तृँचावित्यतः प्राक् कृत्यसंज्ञाः स्युः॥

➢ असरूपापवादप्रत्यय उत्सर्गस्य वा बाधकः।

| | | |
|---|---|---|
| यथा— तव्यत् (तव्य) | अनीयर् (अनीय) | ण्यत् (य) |
| कृ— कर्तव्यम् | करणीयम् | कार्यम् |

➢ सरूपापवादप्रत्ययस्तु उत्सर्गस्य नित्यबाधकः।

| | |
|---|---|
| सूत्रम्— अचो यत् | ऋहलोर्ण्यत् |
| यथा— यत् (य) | ण्यत् (य) |
| चि— चेयम् | कृ— कार्यम् |

❖ उत्सर्गसूत्रम्= सामान्यसूत्रम्= (आद्गुणः)
❖ अपवादसूत्रम्= विशेषसूत्रम्= (वृद्धिरेचि)

❖ सरूपम्= समानं रूपं येषाम्=
❖ असरूपम्=

✓ नानुबन्धकृतम् असारूप्यम्।
अर्थात्— अनुबन्धलोपं कृत्वा असरूपं निर्णेयम्।

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# कृदन्तीयप्रत्ययानां सामान्यार्थः

लघुसिद्धान्तकौमुद्याम् (कृदन्ते कृत्यप्रक्रिया)




{मूलपाठः}

❖ प्रत्ययार्थनिर्धारकं विधिसूत्रम्—१

सूत्रम्— कर्तरि कृत् (३,४.६७)

अर्थः— कृत्प्रत्ययः कर्तरि स्यात्। इति प्राप्ते—

❖ प्रत्ययार्थनिर्धारकं विधिसूत्रम्—२

सूत्रम्— तयोरेव कृत्यक्तखलर्थाः (३,४.७०)

अर्थः— एते भावकर्मणोरेव स्युः॥

- ❖ कृत्यप्रत्ययाः कालसामान्यार्थे भवन्ति।
- ❖ सकर्मकेभ्यः धातुभ्य कृत्य, क्त, खलर्थप्रत्ययाः कर्मणि भवन्ति। तथा अकर्मकेभ्यो भावे = क्रियार्थे भवन्ति।
- ❖ प्रैष-अतिसर्ग-प्राप्तकालेष्वर्थेष्वपि कृत्याः भवन्ति।
- ❖ अर्हे कृत्यतृचश्च' इत्यनेन अर्हे= योग्यार्थे अपि एते भवन्ति।

- ❖ 'शकि लिँङ् च' इत्यनेन शक्यार्थे गम्यमाने कृत्यप्रत्ययाः विधिलिँङ् लौट्लकारश्च भवति।

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# तव्यत्-तव्य-अनीयर्-केलिमर्-प्रत्ययाः



एध्+ तव्य
एध्+ इट् तव्य
एधितव्य
एधितव्यम्

एध्+ अनीय
एधनीय
एधनीयम्

चि+ तव्य
चे+ तव्य
चेतव्य
चेतव्यम्

चि+ अनीय
चे+ अनीय
च् अय्+ अनीय
चयनीयः

❖ कर्मणि प्रत्यये तु विशेष्यानुसारं त्रिषु लिङ्गेषु वचनेषु च प्रयोगः।

❖ तव्यत्-तव्य-अनीयर्-प्रत्ययविधायकं सूत्रम्— {मूलपाठः}

सूत्रम्— तव्यत्तव्यानीयरः (३,१.९३)

अर्थः— धातोरेते प्रत्ययाः स्युः। एधितव्यम्, एधनीयं त्वया— भावे औत्सर्गिकमेकवचनं क्लीबत्वं च। चेतव्यश्चयनीयो वा धर्मस्त्वया

वार्तिकम्— केलिमर उपसंख्यानम्।

अर्थः— 'तव्यत्तव्यानीयरः' इति सूत्रे 'केलिमर्-प्रत्ययस्यापि अधिकवचनं कर्तव्यम्।

पचेलिमा माषाः। पक्तव्या इत्यर्थः। भिदेलिमाः सरलाः। भेत्तव्या इत्यर्थः। कर्मणि प्रत्ययः॥

# कृत्यल्युटोर् बाहुल्येन विधानम्



❖ कृत्यल्युटो बहुलमर्थविधायकं सूत्रम् — {मूलपाठः}

सूत्रम्— कृत्यल्युटो बहुलम् (३,३.११३)

अर्थः— कृत्यसञ्ज्ञकप्रत्ययाः ल्युट् च यत्र विहितास्ततोऽन्यत्रापि बहुलं भवन्ति।

क्वचित्प्रवृत्तिः= अप्रवृत्तस्य प्रवृत्तिः क्वचिदप्रवृत्तिः= प्रवृत्तस्य अप्रवृत्तिः

क्वचिद्विभाषा = नित्य प्राप्तस्य विभाषा क्वचिदन्यदेव = अन्यत्प्राप्तमन्यदेव स्यात्॥

विधेर्विधानं= कार्याणां विधानं बहुधा समीक्ष्य= बहुप्रकारेण ज्ञात्वा

चतुर्विधं= चतुर्धा बाहुलकं वदन्ति= आचार्याः व्यवहरन्ति॥ १॥

(करणे—) स्नात्यनेनेति स्नानीयं= चूर्णम्।

(सम्प्रदाने—) दीयतेऽस्मै दानीयो= विप्रः॥

संस्कृतसारः छिद्यन्ते सर्वसंशयाः

# तव्यत् अनीयरादिप्रत्यये योजिते सामान्यकार्याणि



- ✓ तव्यत्-अनीयर्-प्रत्यययोः परयोः धातोः गुणकार्यं भवति। यथा— (स्मृ) स्मर्तव्यः , स्मरणीयः। श्रू- श्रोतव्यः, श्रवणीयः।
- ✓ आर्धधातुकविवक्षायां कुत्रचिद्धातोः स्थाने आदेशविधानमस्ति। यथा— ब्रू-धातोः स्थाने 'वच्'— वक्तव्यम्, वचनीयम्। अस्-धातोः स्थाने 'भू'— भवितव्यम्, भवनीयम्।
- ✓ तव्य-अनीयर्-प्रत्यययोः आर्धधातुकत्वमस्ति। किन्तु वलादित्वं केवलं तव्य-प्रत्ययस्यास्ति। अतः तव्यप्रत्यये परे सेट्-वेट्-अनिटं ज्ञात्वा धातोः इड् व्यवस्थापनीयम्। यथा— खाद्- खादितव्यम्। गुप्- गोपितव्यम्, गोप्तव्यम्। द्विष्- द्वेष्टव्यम्।
- ✓ येभ्यः धातुभ्यो नुँमागमः, आत्वम्, आयः इत्यादीनि भवन्ति। तान्यत्रापि कर्तव्यान्येव। नुँम्— आरभ्- आरम्भणीयम्। नश्- नंष्टव्यम्। आत्वम्— (त्रै) त्रातव्यम्, त्राणीयम्। आयः— (कम्) कामयितव्यः, कमितव्यः।

## यथाप्राप्तानि कर्तव्यानि सन्धिकार्याणि—

- ➢ ढत्वम्— रुह्- रोढव्यम्। (हो ढः)
- ➢ घत्वम्, (दादेर्धातोर्घः) धत्वम्, (झषस्तथोर्धोऽधः) जश्त्वम् (झलां जश् झशि)— दुह्+ तव्य, दुघ्+ तव्य, दुघ्+ धव्य, दोग्+ धव्य= दोग्धव्यम्।
- ➢ ष्टुत्वम्— तुष्- तोष्टव्यम्। पुष्- पोष्टव्यम्।
- ➢ कुत्वम्— पच्- पक्तव्यम्। भुज्- भोक्तव्यम्।
- ➢ चर्त्वम्— अद्- अत्तव्यम्। छिद्- छेत्तव्यम्।
- ➢ षत्वम्— प्रच्छ्- प्रष्टव्यम्। (व्रश्चभ्रस्ज्....)
- ➢ ओत्वम्— सह्- सोढव्यम्। वह्- वोढव्यम् (सहिवहोरोदवर्णस्य)
- ➢ दीर्घः— तॄ- तरितव्यम्, तरीतव्यम्। (वॄतो वा)

# तव्यानीयरविषये वाक्यरचनाप्रकारः



- कृत्प्रत्ययानां कर्तरि सामान्यतो विधानेऽपि 'तयोरेव कृत्यक्तखलार्थाः' इति सूत्रनियमाद् भावकर्मणोरेव कृत्यप्रत्ययानां विधानाद् **अकर्मकधातोः**— भावे, **सकर्मकाच्च**— कर्मणि एव प्रत्ययाः भवन्ति ।
- तत्र भावे उत्सर्गत: एकवचने नपुंसके चैव कृत्यप्रत्ययाः भवन्ति । कर्त्रादिना सार्धं भावार्थस्य अभेदेन अन्वयाभावात् कर्तरि तृतीया/षष्ठी भवति । यथा – त्वया/तव, मया/मम ,अन्येन/अन्यस्य वा शयनीयम्, शयितव्यम्, इत्यादि ।
- सकर्मकाद्धातोः कर्मणि प्रत्यये कृते विधीयमानकृत्य-प्रत्ययान्तशब्दानां पुँल्लिङ्गविशेषणसत्वे देवशब्दवत्, स्त्रीलिङ्गविशेषणसत्वे रमाशब्दवत्, नपुंसकलिङ्ग-विशेषणसत्वे फलशब्दवद्रूपाणि भवन्ति।

कर्मणः एकत्वे कृत्य-प्रत्ययान्तशब्दानाम् एकवचनं द्वित्वे द्विवचनं बहुत्वे बहुवचनं भवति।
कर्त्तुरनुक्तत्वात् तृतीया/षष्ठीविभक्तिर्भवति ।
कर्मण उक्तत्वात्प्रथमैव विभक्तिर्जायते। यथा –
पुँल्लिङ्गे— त्वया/तव धर्मः चेतव्यः।
स्त्रीलिङ्गे—त्वया/तव कलिके: चेतव्ये।
नपुंसकलिङ्गे— त्वया/तव पुष्पाणि चेतव्यानि।

- लिँङ्लौँट्कृत्यप्रत्ययाः समानार्थकाः भवन्ति।

त्वम् एधस्व। त्वम् एधेथाः।
त्वया एध्यताम्। त्वया एध्येत।
त्वया एधितव्यम्/एधनीयं वा

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# यत्-प्रत्ययविधानम्



**चिञ् चयने**
**इकारान्तः**

चि+ य
चे+ य
चेयम्

**डुदाञ् दाने**
**आकारान्तः**

दा+ य
द् ई+ य
द् ए+ य
देयम्

**ग्लै हर्षक्षये**
**ऐकारान्तः**

ग्लै+ य
ग्ला+ य
ग्ल् ई+ य
ग्ल् ए+ य
ग्लेयम्

**शपँ आक्रोशे**

शप्+ य
शप्यम्

**डुलभँष् प्राप्तौ**

लभ्+ य
लभ्यम्

**यत्-विधायकानि सूत्राणि—**

- सूत्रम्— शकि सहोश्च।
- वार्तिकम्— तकि-शसि-चति-यति-जनिभ्यो यद्वाच्यः।
- सूत्रम्— गद्-मद्-चर्-यमश्चानुपसर्गे।

{मूलपाठः}

- यत्-प्रत्ययविधायकं सूत्रम्—

**सूत्रम्—** अचो यत् (३,१.९७)

**अर्थः—** अजन्ताद्धातोर्यत् स्यात्। चेयम्॥

- ईत्-विधायकं सूत्रम्—

**सूत्रम्—** ईद्यति (६,४.६५)

**अर्थः—** यति परे आत ईत्स्यात्। देयम्। ग्लेयम्॥

- यत्-प्रत्ययविधायकं सूत्रम्—

**सूत्रम्—** पोरदुपधात् (३,१.९८)

**अर्थः—** पवर्गान्ताददुपधाद्यत्स्यात्। ण्यतोऽपवादः। शप्यम्। लभ्यम्॥

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# यत्प्रत्ययाभ्यासः

लघुसिद्धान्तकौमुद्याम् (कृदन्ते कृत्यप्रक्रिया)

- शप्- शप्यम्।
- लभ्- लभ्यम्।
- गम्- गम्यम्।
- रम्- रम्यम्।
- शक्- शक्यम्।
- सह्- सह्यम्।
- तक्- तक्यम्।
- गद्- गद्यम्।
- चर्- चर्यम्।
- शक्- शक्यम्।
- धन्- धन्यम्।
- धा- धेयम्।
- नी- नेयम्।

- वम् - वम्यम्।
- क्री-क्रेयम्।
- क्षम् - क्षम्यम्।
- गद्-गद्यम्।
- गम्- गम्यम्।
- गा-गेयम्।
- ग्ला- ग्लेयम्।
- घ्रा- घ्रेयम्।
- पा- पेयम्।
- चि- चेयम्।
- जन्- जन्यम्।
- जि- जेयम्।
- ज्ञा- ज्ञेयम्।

- दम्-दम्यम्।
- दा-देयम्।
- भू-भव्यम्।
- शम्-शम्यम्।
- श्रु- श्रव्यम्।
- स्तन्- स्तन्यम्।
- स्था-स्थेयम्।
- हा – हेयम्।
- रम्-रम्यम्।
- दम्-दम्यम्।
- लभ्-लभ्यम्।

**छन्दोबद्धोदाहरणम्—**

गेयं गीतानामसहस्रं ध्येयं श्रीपतिरूपमजस्रम्।
नेयं सज्जन सङ्गे चित्तं देयं दीनजनाय च वित्तम्॥

**एतानि समानार्थकान्येव—**

- ✓ त्वं चिनु।
- ✓ त्वया चीयताम्।
- ✓ त्वया/तव चेतव्यम्।
- ✓ त्वया/तव चयनीयम्।
- ✓ त्वया/तव चेयम्।

- ✓ चेतुम् अर्हम्।
- ✓ चेतुं शक्यम्।
- ✓ चेतुं योग्यम्।

सर्वदा ध्येयम्— कर्मणि कृत्यप्रत्यये कर्मानुरोधेन कृत्यप्रत्ययान्तशब्दात् लिङ्गवचनव्यवहारः कार्यः।

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# क्यप्-प्रत्ययविधानम्

लघुसिद्धान्तकौमुद्याम्
(कृदन्ते कृत्यप्रक्रिया)

इण् गतौ
इकारान्तः

इ + य
इ त् + य
इत्यः

ष्टुञ् स्तुतौ
उकारान्तः

स्तु + य
स्तु त् + य
स्तुत्यः

शासुँ अनुशिष्टौ
हलन्तः

शास् + य
शिष् + य
शिष्यः
शासिवसिघसीनां च

वृञ् वरणे
ऋकारान्तः

वृ + य
वृत् + य
वृत्यः

दृङ् आदरे
ऋकारान्तः

दृ + य
आ + दृत् + य
आदृत्यः

जुषी प्रीतिसेवनयोः
हलन्तः

जुष् + य
जुष्यः

कित्वाद्गुणाभावः

मृजूँ शुद्धौ
हलन्तः

मृज् + य
मृज्यः

**क्यप्-विधायकान्यन्यानि सूत्राणि—**

❖ सूत्रम्— विभाषा कृ-वृषोः— कृत्यः/कार्यः, वृष्यः/वर्ष्यः।
❖ सूत्रम्— भृञोऽसञ्ज्ञायाम्— भृत्यः/ भार्या।

**{मूलपाठः}**

❖ क्यप्-प्रत्ययविधायकं विधिसूत्रम्—

सूत्रम्— एति-स्तु-शास्-वृ-दृ-जुषः क्यप् (३,१.१०९)

अर्थः— एभ्यः क्यप् स्यात्॥

❖ तुँक्-विधायकं विधिसूत्रम्—

सूत्रम्— ह्रस्वस्य पिति कृति तुँक् (६,१.७१)

अर्थः— ह्रस्वान्तस्य धातोः पिति कृत्प्रत्यये परतः तुँगागमः स्यात्।

इत्यः। स्तुत्यः। ❑ शासुँ अनुशिष्टौ॥

इद्-विधायकं विधिसूत्रम्—

सूत्रम्— शास इदङ्हलोः (६,४.३४)

अर्थः— शास उपधाया इत्स्यादङि हलादौ क्ङिति।

शिष्यः। वृत्यः। आदृत्यः। जुष्यः॥

❖ विभाषया क्यप्-प्रत्ययविधायकं विधिसूत्रम्—

सूत्रम्— मृजेर्विभाषा (३,१.११३)

अर्थः— मृजेः क्यब्वा। मृज्यः॥

# ण्यत्-प्रत्ययविधानम्



डुकृञ् करणे
ऋकारान्तः

कृ+ य
कार्+ य
कार्यम्

हृञ् हरणे
ऋकारान्तः

हृ+ य
हार्+ य
हार्यम्

धृञ् धारणे
ऋकारान्तः

धृ+ य
धार्+ य
धार्यम्

मृजूँ शुद्धौ
हलन्तः

मृज्+ य
मार्ज्+ य
मार्ग्+ य
मार्ग्यः

भुजँ पालनाभ्यवहारयोः
हलन्तः

भुज्+ य
भोज्+ य= भोज्यम्
भोग्+ य= भोग्यम्

{मूलपाठः}

❖ ण्यत्-प्रत्ययविधायकं विधिसूत्रम्—

सूत्रम्— ऋ-हलोर्ण्यत् (३,१.१२४)

अर्थः— ऋवर्णान्ताद्धलन्ताच्च धातोर्ण्यत्। कार्यम्। हार्यम्। धार्यम्॥

❖ कुत्व-विधायकं विधिसूत्रम्—

सूत्रम्— चजोः कु घिण्ण्यतोः (७,३.५२)

अर्थः—चजोः कुत्वं स्यात् घिति ण्यति च परे॥

❖ वृद्धि-विधायकं विधिसूत्रम्—

सूत्रम्— मृजेर्वृद्धिः (७,२.११४)

अर्थः— मृजेरिको वृद्धिः सार्वधातुकार्धधातुकयोः। मार्ग्यः॥

❖ निपातनार्थ विधिसूत्रम्—

सूत्रम्— भोज्यं भक्ष्ये (७,६.६९)

अर्थः— भुज्-धातोः भक्ष्येऽर्थे ण्यति परतः कुत्वाभावो निपात्यते। भोग्यमन्यत्॥

॥ इति कृत्यप्रक्रिया॥

# कृत्यप्रक्रिया-परीक्षणम्

**०१. कृत्याः कति ?**

क. पञ्च

**ख. सप्त**

ग. अष्टौ

घ. त्रयः

**०२. तिङ्भिन्नप्रत्ययानां का सञ्ज्ञा ?**

क. सुप्

ख. कृत्यः

**ग. कृत्**

घ. धातुः

**०३. प्रायः कृत्प्रत्ययाः कस्मिन्नर्थे भवन्ति ?**

क. भावे

ख. कर्मणि

ग. वर्तमाने

**घ. कर्तरि**

**०४. 'वासरूपोऽस्त्रियाम्' इति सूत्रविषये इदं कथनम् असङ्गतम्—**

क. तृतीयाध्यायस्थधात्वधिकारे इदं प्रवर्तते।

ख. सरूपापवादप्रत्ययः उत्सर्गं नित्यं बाधते।

**ग. असरूपापवादप्रत्ययोऽपि उत्सर्गं नित्यं बाधते।**

घ. इदं 'स्त्रियां क्तिन्' इत्यस्याधिकारे न प्रवर्तते।

**०५. एतेषु परिभाषासूत्रं किम् ?**

**क. वासरूपोऽस्त्रियाम्**

ख. धातोः

ग. कृत्याः

घ. कर्तरि कृत्

**०६. एतेषु भावकर्मणोरेव न भवन्ति—**

क. कृत्याः

ख. क्तः

ग. खलर्थप्रत्ययाः

**घ. कृत्प्रत्ययाः**

**०७. 'एधितव्यम्' इत्यत्र कस्मिन्नर्थे प्रत्ययः?**

**क. भावे**

ख. कर्तरि

ग. कर्मणि

घ. करणे

**०८. 'केलिमर्'प्रत्ययः कस्मिन्नर्थे भवति ?**

क. भावे

ख. कर्तरि

**ग. कर्मणि**

घ. करणे

**०९. 'कृत्याः' इत्यस्याधिकारोऽस्ति—**

क. 'तव्यत्तव्यानीयरः' इत्यतः प्राक्।

**ख. 'ण्वुल्तृचौ इत्यतः प्राक्।**

ग. कृदन्तात् प्राक्।

घ. 'स्त्रियां क्तिन्' इत्यतः प्राक्।

**१०. स्नाति अनेन = 'स्नानीयम्' इत्यस्य कोऽर्थः?**

क. स्नानक्रिया

ख. स्नानं करोतु

**ग. स्नानद्रव्यम्**

घ. स्नानाधिकरणम्

**११. बाहुलकं कति प्रकारकं भवति ?**

क. त्रिधा

**ख. चतुर्धा**

ग. द्विधा

घ. पञ्चधा

**१२. 'चेयम्' इत्यत्र कः प्रत्ययः ?**

**क. यत्**

ख. क्यत्

ग. क्यप्

घ. ण्यत्

**१३. 'दा+ यत्' इत्यस्य किं रूपम्?**

क. दातव्यम्

ख. दिव्यम्

**ग. देयम्**

घ. दानीयः

**१४. पवर्गान्ताद् अदुपधात् कः प्रत्ययो विधीयते ?**

**क. यत्**

ख. क्यत्

ग. क्यप्

घ. ण्यत्

**१५. अस्माद्धातोः 'क्यप्' न भवति ?**

क. जुष्

ख. इण्

**ग. स्वृ**

घ. शास्

**१६. 'शिष्यः' इत्यत्र कः प्रत्ययः ?**

क. यत्

ख. तव्य

**ग. क्यप्**

घ. ण्यत्

**१७. 'आदृत्यः' अत्र को धातुः?**

**क. दृ**

ख. दृत्

ग. आदृ

घ. आदृत्

**१८. 'शास्' धातुः कस्मिन्नर्थे ?**

क. गतौ

ख. ज्ञाने

ग. प्रवेशे

**घ. अनुशासने**

**१९. 'मृज्+ ण्यत्' इत्यस्य किं रूपम् ?**

क. मृज्यः

ख. मृक्यः

**ग. मार्ग्यः**

घ. मार्ज्यः

**२०. 'कार्यम्' इत्यत्र कः प्रत्ययः ?**

क. यत्

ख. तव्य

**ग. ण्यत्**

घ. क्यप्

**२१. हलन्तधातुम् उद्दिश्य कः प्रत्ययो विधीयते ?**

क. यत्

ख. केलिमर्

ग. क्यप्

**घ. ण्यत्**

**२२. 'मार्ग्यः' जकारस्य स्थाने गकारः केन** —

क. मृजेर्वृद्धिः

**ख. चजोः कुः घिण्यतोः**

ग. मृजेर्विभाषा

घ. ह्रस्वस्य पिति कृति तुँक्

**२३. भक्ष्यार्थे किं रूपं साध्वस्ति**—

क. भोग्यम्

ख. भोक्तव्यम्

**ग. भोज्यम्**

घ. भुक्तम्

**२४.कृदन्तप्रकरणस्य विभाजनं कौमुद्यां कतिधा कृतम्**—

**क. चतुर्धा**

ख. द्विधा

ग. त्रिधा

घ. पञ्चधा

**२५. श्रु-धातोरिदं रूपं कृत्यप्रक्रियायां न सम्भाव्यते**—

क. श्रव्यम्

ख. श्रवणीयम्

ग. श्रोतव्यम्

**घ. श्रेयम्**

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# पूर्वकृदन्तप्रत्ययाः

लघुसिद्धान्तकौमुद्याम् (कृदन्ते पूर्वकृदन्तम्)

| | | | | | | |
|---|---|---|---|---|---|---|
| ०१.ण्वुल् | ०२. तृच् | ०३. ल्यु | ०४.णिनिँ (३) | ०५.अच् | ०६.क | ०७.अण् |
| ०८.ट | ०९.खश् (२) | १०.खच् | ११.मनिँन् | १२.क्वनिँप् (२) | १३. वनिँप् | १४.विँच् |
| १५. क्विँप् (२) | १६. ड | १७. क्त | १८. क्तवतुँ | १९.कानच् | २०. क्वसुँ | २१. शतृ |
| २२. शानच् | २३. तृन् | २४. षाकन् | २५. उ | २६. ष्ट्रन् | २७. इत्र | |

# ण्वुल्तृचोर् विधानम्



कृ+ ण्वुल्
कृ+ वु
कृ+ अक
कार्+ अक
कारकः

कृ+ तृच्
कृ+ तृ
कर्+ तृ
कर्तृ+ स्

कर्तृ+ स्
कर्त् अन्+ स्
कर्त् आन्+ स्
कर्त् आन्
कर्ता

त्रिषु लिङ्गेषु प्रयोगः

{मूलपाठः}

❖ ण्वुल्तृच्-प्रत्ययविधायकं विधिसूत्रम्—

सूत्रम्— ण्वुल्तृचौ (३,१.१३३)

अर्थः— धातोरेतौ स्तः।

कर्तरि कृदिति कर्त्रर्थे॥

❖ अन-अकादेशविधायकं विधिसूत्रम्—

सूत्रम्— युवोरनाकौ (७,१.१)

अर्थः— यु वु एतयोरनाकौ स्तः।

कारकः। कर्ता॥

यु → अन

वु → अक

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# ल्यु-णिनिँ-अच्प्रत्ययानां विधानम्

लघुसिद्धान्तकौमुद्याम्
(कृदन्ते पूर्वकृदन्तम्)

❖ ल्यु-णिनिँ-अच्प्रत्ययविधायकं विधिसूत्रम्— {मूलपाठः}

सूत्रम्— नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः (३,१.१३४)

अर्थः— नन्द्यादेर्ल्युः, ग्रह्यादेर्णिनिः, पचादेरच् स्यात्।
नन्दयतीति नन्दनः। जनमर्दयतीति जनार्दनः। लवणः।
ग्राही। स्थायी। मन्त्री।
पचः। पचादिराकृतिगणः॥

नन्द् णिच्+ ल्यु
नन्दि+ यु
नन्द्+ अन
नन्दनः

जनम् अर्द् णिच्+ ल्यु
जन + ङस् अर्दि + अन
जन अर्द् + अन
जनार्दनः

लू+ ल्यु
लो+ अन
लव्+ अन
लवणः

ग्रह्+ णिनिँ
ग्राह्+ इन्
ग्राहिन्
ग्राही

स्था+ णिनिँ
स्था+ इन्
स्थायिन्
स्थायी

मन्त्रि+ णिनिँ
मन्त्र्+ इन्
मन्त्री

पच्+ अच्
पच्+ अ
पचः

नन्दादिगणपठितेभ्यः → ल्यु

ग्रह्यादिगणपठितेभ्यः → णिनिँ

पचादिगणपठितेभ्यः → अच्

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# क-प्रत्ययस्य विधानम्
(कर्तरि)

लघुसिद्धान्तकौमुद्याम्
(कृदन्ते पूर्वकृदन्तम्)

- इक् प्रत्याहारः। इक् उपधा यस्य सः= इगुपधः धातुः।
- कप्रत्यये कित्त्वं गुणनिषेधार्थम्।

बुध्+ क
बुध्+ अ
बुधः

- 'बुधँ अवगमने' इति धातोः— बुधः। बुध्यते।
- 'कृशँ तनूकरणे' इति धातोः — कृशः। कृश्यति।

- 'ज्ञा अवबोधने' — जानातीति ज्ञः। ज्ञा+ क इति स्थिते 'आतो लोप इटि च' इति आलोपे ज्ञः इति रूपम्।
- 'प्रीञ् तर्पणे' प्रीणाति इति प्रियः। प्री + क इति स्थिते 'अचि धातुभ्रुवां य्वोरियङुवङौ' इति योगेन इयङादेशे प्रिय इति रूपम्।
- 'कॄ विक्षेपे' इति धातोः कप्रत्यये 'ॠत इद्धातोः' इति 'उरण् रपरः' इति च ॠकारस्य इरादेशे 'किर् + अ' इति स्थिते वर्णसम्मेलने किरः इति रूपम्।

- प्रकर्षेण जानातीति प्रज्ञः।
- 'सु' उपपदात् ग्लैधातोः कप्रत्यये 'आदेच उपदेशेऽशिति' इति आत्वे कृते सुग्ला + अ 'आतो लोप इटि च' इति सूत्रेण आलोपे सुग्लः इति रूपम्॥

- क-प्रत्ययविधायकं विधिसूत्रम्— {मूलपाठः}

सूत्रम्— इगुपध-ज्ञा-प्री-किरः कः (३,१.१३५)
अर्थः— एभ्यः कः स्यात्।
बुधः। कृशः। ज्ञः। प्रियः। किरः॥

क-प्रत्ययविधायकं विधिसूत्रम्—
सूत्रम्— आतश्चोपसर्गे (३,१.१३६)
अर्थः— आदन्ताद्धातोः उपसर्गे उपपदे कः स्यात्। प्रज्ञः। सुग्लः॥

क-प्रत्ययविधायकं विधिसूत्रम्—
सूत्रम्— गेहे कः (३,१.१४४)
अर्थः— गेहे कर्तरि ग्रहेः कः स्यात्। गृहम्॥

- गृह्णाति धान्यादिकमिति गृहम्। 'ग्रह् + अ' इत्यत्र प्रत्ययस्य कित्त्वात् 'ग्रहिज्या..' इति सूत्रेण ग्रहेः संप्रसारणे 'गृह् + अ' इति स्थिते विभक्तिकार्ये- गृहम्।

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# अणापवादस्य कप्रत्ययस्य निरूपणम्
(कर्तरि)



❖ कुम्भं करोतीति लौकिकविग्रहे ‘कुम्भमि’त्युपपदे ‘डुकृञ् करणे’ इति धातोः अणप्रत्यये कृते ‘कृ+अण्’ इति जाते णकारस्येत्सञ्ज्ञायां लोपे च ततः धातोः ऋकारस्य ‘अचो ञ्णिति’ इत्यनेन वृद्धौ ‘कार’ इति निष्पद्यते। तदनु ‘कार’ इति कृदन्तस्य योगे कर्मवाचकात् कुम्भपदात् षष्ठीविभक्तौ ‘कुम्भ+ङस् कार’ इति जाते ततः ‘गतिकारकोपपदानां कृद्भिस्सह समासवचनं प्राक् सुबुत्पत्तेः’ इति नियमात् ‘उपपदमतिङ्’ इति सूत्रेणोपपदसमासे समासत्वात् प्रातिपदिकत्वे प्रातिपदिकत्वात् ‘सुँपो धातुप्रातिपदिकयोः’ इत्यनेन ‘ङस्’ इत्यस्य सुब्लुकि— ‘कुम्भकार’ इति पदस्य समासत्वात् प्रातिपदिकत्वात् स्वादिकार्ये च कृते प्रथमैकवचने ‘कुम्भकारः’ इति सिद्धम्।

गां ददातीति
गो+ङस्+दा+ क
गो+द्+ अ
गोदः

गो+सम्+दा+ क
गोसन्दा युँक्+ अ
गोसन्दा य्+ अ
गोसन्दायः

मूल+वि+भुज्+ क
मूल+वि+भुज्+ अ
मूलविभुजः

मही+धृ+ क
मही+ध् र्+ अ=

❖ अण्-प्रत्ययविधायकं विधिसूत्रम्— {मूलपाठः}

सूत्रम्— कर्मण्यण् (३,२.१)

अर्थः— कर्मण्युपपदे धातोरण् प्रत्ययः स्यात्।

कुम्भं करोतीति— कुम्भकारः॥

❖ क-प्रत्ययविधायकं विधिसूत्रम्—

सूत्रम्— आतोऽनुपसर्गे कः (३,२.३)

अर्थः— आदन्ताद्धातोरनुपसर्गात्कर्मण्युपपदे कः स्यात्। अणोऽपवादः।

‘आतो लोप इटि च’ गोदः। धनदः। कम्बलदः।

अनुपसर्गे किम्? गोसन्दायः।

वार्तिकम्— मूलविभुजादिभ्यः कः।

अर्थः— एषां सिद्ध्यर्थं अणापवादः कः स्यात्।

मूलानि विभुजति— मूलविभुजो रथः।

आकृतिगणोऽयम्। महीध्रः। कुध्रः॥

# टप्रत्ययस्य निरूपणम्
(कर्तरि)



कुरुषु चरतीति
कुरु+सुप्+चर्+ ट
कुरुचर्+ अ
कुरुचरः

भिक्षां चरतीति
भिक्षा+ङस्+चर्+ ट
भिक्षाचर्+ अ
भिक्षाचरः

आदाय चरतीति
आदाय+चर्+ ट
आदायचर्+ अ
आदायचरः

सेनां चरतीति
सेनाचरः

पचाद्यच्

सहचरतीति— सहचरः
शनैश्चरतीति— शनैश्चरः

{मूलपाठः}

❖ ट-प्रत्ययविधायकं विधिसूत्रम्—

सूत्रम्— चरेष्टः (३,२.१६)

अर्थः— अधिकरणे उपपदे।

कुरुचरः॥

❖ ट-प्रत्ययविधायकं विधिसूत्रम्—

सूत्रम्— भिक्षा-सेनाऽऽदायेषु च (३,२.१७)

अर्थः— भिक्षा-सेना-आदायपूर्वाच्चरतेष्टः स्यात्।

भिक्षाचरः। सेनाचरः।

आदायेति ल्यबन्तम्। आदायचरः॥

# टप्रत्ययस्य निरूपणम्
(कर्तरि)



{मूलपाठः}

❖ ट-प्रत्ययविधायकं विधिसूत्रम्—

सूत्रम्— कृञो हेतु-ताच्छील्यानुलोम्येषु (३,२.२०)

अर्थः— एषु द्योत्येषु करोतेष्टः स्यात्॥

❖ सकारादेशविधायकं विधिसूत्रम्—

सूत्रम्— अतः कृ-कमि-कंस-कुम्भ-पात्र-कुशा-कर्णीष्वनव्ययस्य (८,३.४६)

अर्थः— [1]आदुत्तरस्यानव्ययस्य (अनुत्तरपदस्थस्य) विसर्गस्य समासे नित्यं सादेशः करोत्यादिषु परेषु। यशस्करी विद्या। श्राद्धकरः। वचनकरः॥

१.'अत उत्तरस्य' इति चेन्नै संस्करणे पाठः।

यशः करोतीति
(हेतुः= कारणम्)
यशस्+ ङस्+कृ+ ट
यशस्+ कर्+ अ
यशः+ कर्+ अ
यशस्+ कर्+ अ
यशस्कर+ ङीप्
यशस्करी

शोककरी अविद्या
लज्जाकरः स्वजनविरोधः
उन्नतिकरः सज्जनसङ्गमः

श्राद्धं करोतीति
(तच्छीलः= स्वभावः)
श्राद्धकरः

वचनं करोतीति
(आनुलोम्यम्= वशवर्तिता)
वचनकरः

# (कर्तरि) खश्-खच्प्रत्ययोर् निरूपणम्



जनम् एजयतीति
जन+ ङस्+एजि+ खश्
जन+ ङस्+एजि अ (शप्)+ अ
जन+ ङस्+एजे अ+ अ
जन+ ङस्+ एजय
जन+ एजय
जन मुँम्+ एजय
जन म्+ एजय
जनमेजयः

पण्डित + ङस्+मन् श्यन्+ खश्

{मूलपाठः}

❖ खश्-प्रत्ययविधायकं विधिसूत्रम्—

सूत्रम्— एजेः खश् (३,२.२८)

अर्थः— ण्यन्तादेजेः खश् स्यात्॥

❖ मुँमागमविधायकं विधिसूत्रम्—

सूत्रम्— अरुर्द्विषदजन्तस्य मुँम् (६,३.६७)

अर्थः— अरुषो द्विषतोऽजन्तस्य च मुँमागमः स्यात्खिदन्ते परे न त्वव्ययस्य। शित्वाच्छबादिः। जनमेजयतीति— जनमेजयः॥

प्रियं वदतीति
प्रिय + ङस्+वद्+ खच्
प्रिय म् + वद्+ अ
प्रियंवदः

❖ खच्-प्रत्ययविधायकं विधिसूत्रम्—

सूत्रम्— प्रियवशे वदः खच् (३,२.३८)

अर्थः— प्रियंवदः। वशंवदः॥

❖ खश्-प्रत्ययविधायकं विधिसूत्रम्—

सूत्रम्— आत्ममाने खश्च (३,२.८३(क्वचित्संस्करणेष्विदं सूत्रं 'मनः'सूत्रात् परं वर्तते।)

अर्थः— स्वकर्मके मनने वर्तमानान्मन्यतेः सुपि खश् स्यात् चाण्णिनिः। पण्डितमात्मानं मन्यते— पण्डितम्मन्यः। पण्डितमानी॥

# मनिँन्-क्वनिँप् -वनिँप्-विँच्-प्रत्ययानां निरूपणम् (कर्तरि)



सुष्ठु शृणातीति
सु+ शॄ+ मनिँन्
सु+ शर्+ मन्
सुशर्मन्+ सुँ
सुशर्मा

प्रातर् एतीति
प्रातर्+ इ+ क्वनिँप्
प्रातर्+ इ+ वन्
प्रातर्+ इ तुँक्+ वन्
प्रातरित्वन्= प्रातरित्वा

वि+ जन्+ वनिँप्
वि+ जन्+ वन्
वि+ ज आ+ वन्
विजावन्= विजावा

ओण्+ वनिँप्
ओ आ+ वन्
अव् आ+ वन्
अवावन्= अवावा

रुष्+ विँच्
रोष्= रोट् रोड्

सुष्ठु गणयतीति
सु+ गण्+ विँच्
सुगण्

{मूलपाठः}

❖ मनिँन्-क्वनिँप् -वनिँप्-विँच्-प्रत्ययविधायकं विधिसूत्रम्—

सूत्रम्— अन्येभ्योऽपि दृश्यन्ते (३,२.७५)

अर्थः— मनिँन्,क्वनिँप्,वनिँप्,विँच् एते प्रत्यया धातोः स्युः॥

❖ इण्निषेधकं विधिसूत्रम्—

सूत्रम्— नेड्वशि कृति (७,२.८)

अर्थः—वशादेः कृत इण् न स्यात्॥

शॄ हिंसायाम्— सुशर्मा। प्रातरित्वा॥

| | |
|---|---|
| मनिँन्— | मन् |
| क्वनिँप् — | वन् |
| वनिँप् — | वन् |
| विँच् — | ✗ |

❖ आत्-आदेशविधायकं विधिसूत्रम्—

सूत्रम्— विड्वनोरनुनासिकस्याऽऽत् (६,४.४१)

अर्थः— अनुनासिकस्याऽऽत्स्यात्।

विजायत इति— विजावा॥ ओणृँ अपनयने— अवावा।

विँच्— रुष रिष हिंसायाम्॥ रोट्। रेट्। सुगण्॥

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# क्विँप् -प्रत्ययस्य निरूपणम् (कर्तरि)



**उखायाः स्रंसते**
उखा+ ङसिँ+ स्रंस्+ क्विँप्
उखा+ ङसिँ+ स्रंस्+
उखास्रस् (अनिदितां...)
उखास्रद्+ स् (वसुस्रंसु...)
उखास्रत्-द्

**पर्णाद् ध्वंसते**
पर्ण+ ङसिँ+ ध्वंस्+ क्विँप्
पर्ण + ङसिँ+ ध्वंस् +
पर्णध्वस् (अनिदितां...)
पर्णध्वद् + स् (वसुस्रंसु...)
पर्णध्वत्-द्

**वाहाद् भ्रंशते/भ्रश्यतीति वा**
वाह+ ङसिँ+ भ्रंश्+ क्विँप्
वाहभ्रश् (अनिदितां...)
वाहभ्रष् + स् (व्रश्चभ्रस्ज...)
वाहभ्रट्-ड् (जश्त्वं वैकल्पिकचर्त्वञ्च)

❖ क्विँप्-प्रत्ययविधायकं विधिसूत्रम्— {मूलपाठः}

**सूत्रम्—** क्विँप् च (३,२.७६)
**अर्थः—** अयमपि दृश्यते।
(सोपपदान्निरुपपदाद्वा धातोः लोकेऽपि क्विँप् स्यात्।)
उखास्रत्। पर्णध्वत्। वाहभ्रट्॥

❌ क्विँपः सर्वापहारी लोपः कथम् ?

हलन्त्यम्— प्
लशक्वतद्धिते — क्
उपदेशेऽजनुनासिक इत् — इँ
वेरपृक्तस्य— व्

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# णिनिँ -प्रत्ययस्य निरूपणम् (कर्तरि)

लघुसिद्धान्तकौमुद्याम् (कृदन्ते पूर्वकृदन्तम्)

- उष्णं भोक्तुं शीलमस्य।
- उष्णं भुङ्क्ते तच्छीलः।
- उष्णं भोक्तुं शीलः।
- उष्णं भुङ्क्ते एवं शीलः।

उष्ण+ ङस्+ भुज्+ णिनिँ

उष्ण+ भोज्+ इन्

उष्णभोजिन्+ स् (सौ च)

उष्णभोजी

- दर्शनीयं मन्यते इति।

दर्शनीय+ ङस्+ मन्+ णिनिँ

दर्शनीयमान्+ इन्

दर्शनीयमानी

शीतं भुङ्क्ते तच्छीलः= शीतभोजी

प्रियं वदति तच्छीलः= प्रियवादी

सत्यं वदति तच्छीलः= सत्यवादी

मितं भाषन्ते तच्छीलाः= मितभाषिणः

धनं ददाति तच्छीलः= धनदायी

गां ददाति तच्छीलः= गोदायी

अनु यातुं शीलः= अनुयायी

उपजीवितुं शीलः = उपजीवी

परजीवितुं शीलः = परजीवी

वि= विशेषेण सर्तुं शीलमस्य= विसारि (धाम = तेज )

{मूलपाठः}

- णिनिँ-प्रत्ययविधायकं विधिसूत्रम्—

**सूत्रम्**— सुँप्यजातौ णिनिस्ताच्छील्ये (३,२.७८)

**अर्थः**— अजात्यर्थे सुपि धातोर्णिनिस्ताच्छील्ये द्योत्ये। उष्णभोजी॥

- णिनिँ-प्रत्ययविधायकं विधिसूत्रम्—

**सूत्रम्**— मनः (३,२.८२)

**अर्थः**— सुपि मन्यतेर्णिनिः स्यात्। दर्शनीयमानी॥

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# खश्-णिनिँ-प्रत्यययोः विधानम् (कर्तरि)



पण्डित+ ङस्+ मन्+ खश्
पण्डित+ ङस्+ मन् श्यन्+ अ
पण्डित+ मन् य+ अ
पण्डित मन्य+ अ
पण्डित मुँम् मन्य
पण्डित म् मन्य
पण्डितम्मन्यः,
पण्डितंमन्यः

❖ कालीमात्मानं मन्यते।
काली+ ङस्+ मन्+ खश्
काली+ ङस्+ मन् श्यन्+ अ
काली+ मन् य+ अ
कालि मन्य+ अ
कालि मुँम् मन्य
कालि म् मन्य
कालिम्मन्या
कालिंमन्या

{मूलपाठः}

❖ खश्-णिनिँ-प्रत्ययविधायकं विधिसूत्रम्—

सूत्रम्— **आत्ममाने खश्च (३,२.८३)**

अर्थः— स्वकर्मके मनने वर्त्तमानान्मन्यतेः सुँपि खश् स्यात्, चाण्णिनिः। पण्डितमात्मानं मन्यते— पण्डितम्मन्यः। पण्डितमानी॥

❖ ह्रस्व-विधायकं विधिसूत्रम्—

सूत्रम्— **खित्यनव्ययस्य (६,३.६६)**

अर्थः— खिदन्ते परे पूर्वपदस्य ह्रस्वः। ततो मुँम्। कालिम्मन्या॥

❖ णिनिँ-प्रत्ययविधायकं विधिसूत्रम्—

सूत्रम्— **करणे यजः (३,२.८५)**

अर्थः— करणे उपपदे भूतार्थे यजेर्णिनिः कर्तरि। सोमेनेष्टवान् सोमयाजी। अग्निष्टोमयाजी॥

# क्वनिँप्-प्रत्ययस्य विधानम् (कर्तरि)



पार+ ङस्+ दृश्+ क्वनिँप्
पार+ ङस्+ दृश्+ वन्
पार+ दृश्+ वन्
पारदृश्वन्+ स्
पारदृश्वा
शास्त्रं दृष्टवान्— शास्त्रदृश्वा
विश्वं दृष्टवान्— विश्वदृश्वा

सह+ युध्+ क्वनिँप्
सहयुध्वन्+ स्
सहयुध्वा

राजन्+ ङस्+ युध्+ क्वनिँप्
राजन्+ युध्+ वन्
राजयुध्वन्+ स्
राजयुध्वा

राजन्+ ङस्+ कृ+ क्वनिँप्
राजन्+ कृ तुँक्+ वन्
राजकृत्वन्+ स्
राजकृत्वा

{मूलपाठः}

❖ क्वनिँप्-प्रत्ययविधायकं विधिसूत्रम्—
सूत्रम्— दृशेः क्वनिँप् (३,२.९४)
अर्थः— कर्मणि= कर्मण्युपपदे भूते (दृशेः क्वनिँप् प्रत्ययः स्यात्)। पारं दृष्टवान्— पारदृश्वा॥

❖ क्वनिँप्-प्रत्ययविधायकं विधिसूत्रम्—
सूत्रम्— राजनि युधि-कृञः (३,२.९५)
अर्थः— राजनि= राजशब्दे कर्मण्युपपदे भूते युधि-कृञः= युध्-धातोः कृञ्-धातोश्च क्वनिँप्स्यात्। युधिरन्तर्भावितण्यर्थः।
राजानं योधितवान्— राजयुध्वा। राजकृत्वा॥

❖ क्वनिँप्-प्रत्ययविधायकं विधिसूत्रम्—
सूत्रम्— सहे च (३,२.९६)
अर्थः— कर्मणीति निवृत्तम्।
(सह-शब्दे उपपदे युधि-कृञः क्वनिँप्स्यात्।)
सह योधितवान्— सहयुध्वा। सहकृत्वा॥

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

लघुसिद्धान्तकौमुद्याम्
(कृदन्ते पूर्वकृदन्तम्)

# ड -प्रत्ययस्य विधानम्

❖ सरसि जातम्

सरस्+ ङि+ जन्+ ड

सरस्+ इ+ ज्+ अ (टिलोपः)

सरसिज+ सुँ > अम्

सरसिजम्

लुक्पक्षे—

सरस्+ ज्+ अ (टिलोपः)

सर रुँ+ ज्+ अ (ससजुषो रुँः)

सर उ+ ज्+ अ (हशि च)

सरो+ ज्+ अ (आद्गुणः)

सरोज+ सुँ > अम्

सरोजम्

❖ प्रजाता इति

प्र+ जन्+ ड

प्र+ ज् अ (टिलोपः)

प्र+ ज+ टाप्

प्र+ ज+ आ=

प्रजा+ सुँ

प्रजा

{मूलपाठः}

❖ ड-प्रत्ययविधायकं विधिसूत्रम्—

सूत्रम्— सप्तम्यां जनेर्डः (३,२.९७)

अर्थः— सप्तम्यन्ते उपपदे भूतार्थात् जनेर्डः स्यात्।

❖ अलुक्-विधायकं विधिसूत्रम्—

सूत्रम्— तत्पुरुषे कृति बहुलम् (६,३.१४)

अर्थः— तत्पुरुषे समासे कृदन्ते उत्तरपदे बहुलं ङेरलुक्। सरसिजम्, सरोजम्॥

❖ ड-प्रत्ययविधायकं विधिसूत्रम्—

सूत्रम्— उपसर्गे च संज्ञायाम् (३,२.९९)

अर्थः— उपसर्गे उपपदे 'जनेर्डः' स्यात् संज्ञायाम्। 'प्रजा' स्यात्संततौ जने॥

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# निष्ठासञ्ज्ञकौ क्त-क्तवतुँप्रत्ययौ

क्तस्य— भावकर्मणोः, क्तवतुँप्रत्ययस्य— कर्तरि विधानम्।



{मूलपाठः}

## क्त (त)—

- वलादिः, कित् आर्धधातुकश्च
- अकर्मकधातुभ्यः— भावे
  (सर्वदा नपुंसकलिङ्गे एव प्रयोगः)
- सकर्मकधातुभ्यः— कर्मणि
  (विशेष्यानुगुणं त्रिषु लिङ्गेषु प्रयोगः)

| पुल्लिँङ्गे | स्त्रीलिङ्गे | नपुंसकलिङ्गे |
|---|---|---|
| स्तुतः | स्तुता | स्तुतम् |

- क्वचित् कर्तर्यपि

## क्तवतु (तवत्)—

- वलादिः कित् उगित् आर्धधातुकश्च
- सर्वधातुभ्यः— कर्तरि
- (विशेष्यानुगुणं त्रिषु लिङ्गेषु प्रयोगः)

| पुल्लिँङ्गे | स्त्रीलिङ्गे | नपुंसकलिङ्गे |
|---|---|---|
| कृतवान् | कृतवती | कृतवत् |

- ष्टुञ् स्तुतौ (सकर्मकः, अनिट्)

स्तु+ त

स्तुतः (विष्णुः)

- ष्णा शौचे (अकर्मकः, अनिट्)

स्ना+ त

स्नातम्

(चेष्टितं शयितं सुप्तं कम्पितं लज्जितम्)

- डुकृञ् करणे (सकर्मकः, अनिट्)

कृ+ तवत् (क्तवतुँ)

कृतवत्= कृतवान्

- निष्ठासञ्ज्ञाविधायकं सञ्ज्ञासूत्रम्—

**सूत्रम्**— क्त-क्तवतू निष्ठा (१,१.२६)

**अर्थः**— एतौ निष्ठासञ्ज्ञौ स्तः॥

- निष्ठा-प्रत्ययविधायकं विधिसूत्रम्—

**सूत्रम्**— निष्ठा (३,२.१०२)

**अर्थः**—भूतार्थवृत्तेर्धातोर्निष्ठा स्यात्।
तत्र '**तयोरेव..**'ति भावकर्मणोः क्तः।
'**कर्तरि कृदि**'ति कर्तरि क्तवतुः। उकावितौ।
स्नातं मया।
स्तुतस्त्वया विष्णुः।
विश्वं कृतवान् विष्णुः॥

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# निष्ठाप्रकरणे नकारविधानम्

लघुसिद्धान्तकौमुद्याम्
(कृदन्ते पूर्वकृदन्तम्)

❖ शॄ (सकर्मकः, सेट्)
शॄ+ क्त/ क्तवतुँ
शॄ+ त/ तवत्
श् इर्+ त (श्र्युकः किति)
शीर्+ त (हलि च)
शीर्+ न
शीर्+ ण (रषाभ्यां..)
शीर्णः /शीर्णवान्

❖ द्रा(अकर्मकः, अनिट्)
द्रा+ त
द्रा+ न
द्रा+ ण= द्राणः

❖ भिद्/ छिद् (सकर्मकः, अनिट्)
भिद्/ छिद्+ क्त
भिद्/ छिद्+ त (एकाच उपदेशे...)
भिन्/ छिन्+ न
भिन्नः, छिन्नः
भिन्नवान्, छिन्नवान्
खिद्—खिन्नः, खिन्नवान्
उद्+पद् —उत्पन्नः, उत्पन्नवान्
प्र+सद् —प्रसन्नः, प्रसन्नवान्

❖ ग्लै (अकर्मकः, अनिट्)
ग्ला+ त
ग्ला+ न = ग्लानः

{मूलपाठः}

❖ नकारादेशविधायकं विधिसूत्रम्—
सूत्रम्— रदाभ्यां निष्ठातो नः पूर्वस्य च दः (८,२.४२)
अर्थः— रदाभ्यां परस्य निष्ठातस्य नः स्यात्, निष्ठापेक्षया पूर्वस्य धातोर्दस्य च॥
शॄ हिंसायाम्॥ 'ॠत इत्..'। रपरः। णत्वम्। शीर्णः। भिन्नः। छिन्नः॥

❖ नकारादेशविधायकं विधिसूत्रम्—
सूत्रम्— संयोगादेरातो धातोर्यण्वतः (८,२.४३)
अर्थः—निष्ठातस्य नः स्यात्। द्राणः। ग्लानः॥




❖ धातुः
❖ आकारान्तः
❖ यण्वान्
❖ संयोगादिः

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# निष्ठाप्रकरणे नकारविधानम्



❖ लूञ् (सकर्मकः, सेट्)

लू+ त

लू+ न (श्र्युकः किति)

लूनः , लूनवान्

❖ श्वि (अकर्मकः, सेट्)

उद्+ श्वि+ त

उद्+ शु+ त (वचिस्वपि..)

उद्+ शू+ न (हलः)

उज्+ शू+ न (श्चुत्वम्)

उच्+ शू+ न (चर्त्वम्)

उच्+ छू+ न (छत्वम्)

उच्छूनः , उच्छूनवान्

❖ ज्या (अकर्मकः, अनिट्)

ज्या+ त

ज् इ आ+ त

ज् इ + त

ज् ई + न

जीनः , जीनवान्

❖ भुज् (सकर्मकः, अनिट्)

भुज्+ त

भुज्+ न

भुग्+ न (चोः कुः)

भुग्नः , भुग्नवान्

{मूलपाठः}

❖ नकारादेशविधायकं विधिसूत्रम्—

सूत्रम्— ल्वादिभ्यः (८,२.४४)

अर्थः— एकविंशतेर्लूञादिभ्यः प्राग्वत्=निष्ठा तस्य नः स्यात्। लूनः॥ ज्या धातुः॥ 'ग्रहिज्येति...' संप्रसारणम्—

❖ दीर्घ-विधायकं विधिसूत्रम् —

सूत्रम्— हलः (६,४.२)

अर्थः— अङ्गावयवाद्धलः परं यत्सम्प्रसारणं तदन्तस्य दीर्घः। जीनः॥

❖ नकारादेशविधायकं विधिसूत्रम्—

सूत्रम्— ओदितश्च (८,२.४५)

अर्थः— 'ओकार' इत् यस्मिन् तस्माद्धातोः निष्ठा तस्य नः स्यात्।

भुजों— भुग्नः। टुओँश्वि— उच्छूनः॥

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# निष्ठायाः तकारस्य स्थाने क-व-म-विधानम्
## (प्रत्ययस्थानिकादेशाः)



❖ (अकर्मकः, अनिट्)
शुष्+ त
शुष्+ त
शुष्कः , शुष्कवान्

❖ (सकर्मकः, अनिट्)
पच्+ त
पच्+ व
पक्वः , पक्ववान्

❖ (अकर्मकः, अनिट्)
क्षै + त
क्षा + त
क्षा + म
क्षामः , क्षामवान्

{मूलपाठः}

❖ कादेश-विधायकं विधिसूत्रम्—

सूत्रम्— शुषः कः (८,२.५१)

अर्थः— शुष्-धातोः निष्ठातस्य कः (स्यात्)॥ शुष्कः॥

❖ वादेश-विधायकं विधिसूत्रम् —

सूत्रम्— पचो वः (८,२.५२)

अर्थः— पच्-धातोः निष्ठातस्य वः (स्यात्)॥ पक्वः॥ क्षै क्षये[१]—

❖ मादेश-विधायकं विधिसूत्रम्—

सूत्रम्— क्षायो मः (८,२.५३)

अर्थः— क्षै-धातोः निष्ठातस्य मः (स्यात्)॥ क्षामः॥

१. 'हर्षक्षये' इति चेन्नै संस्करणस्थः पाठः।

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# निष्ठाप्रकरणे लोपनिपातने प्रकृतिस्थानिक-कार्याणि



❖ (अकर्मकः, सेट्)

भू णिच्+ त

भौ इ+ त

भाव् इ+ इ त

भाव् + इ त

भावितः , भावितवान्

❖ (सकर्मकः, अनिट्)

धा+ त

हि+ त

हितम् , हितवान्

❖ (सकर्मकः, अनिट्)

दा+ त

दथ्+ त

दत्+ त (खरि च)

दत्तः , दत्तवान्

{मूलपाठः}

❖ णिलोप-विधायकं विधिसूत्रम्—

सूत्रम्— निष्ठायां सेटि (६,४.५२)

अर्थः— णेर्लोपः। भावितः। भावितवान्। दृह हिंसायाम्—

❖ निपातार्थं विधिसूत्रम् —

सूत्रम्— दृढः स्थूलबलयोः (७,२.२०)

अर्थः— स्थूले बलवति च (दृढः) निपात्यते॥

❖ हि-आदेशविधायकं विधिसूत्रम्—

सूत्रम्— दधातेर्हिः (७,४.४२)

अर्थः— तादौ किति। हितम्॥

❖ दथादेश-विधायकं विधिसूत्रम्—

सूत्रम्— दो दद् घोः (७,४.४६)

अर्थः— घुसंज्ञकस्य दा इत्यस्य 'दथ्'[१] स्यात् तादौ किति। चर्त्वम्— दत्तः॥

१. कतिपयसंस्करणेषु 'दद्-दध्-दत्' इत्यपि पाठः समुपलभ्यते।

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# निष्ठाप्रकरणे विविधकार्याणां सङ्ग्रहः

लघुसिद्धान्तकौमुद्याम् (कृदन्ते पूर्वकृदन्तम्)

सूत्राणि

❖ **सम्प्रसारणम्**
वच्— उक्तः
स्वप्— सुप्तः
ग्रह्— गृहीतः

- ➢ वचिस्वपियजादीनां किति
- ➢ ग्रहिज्या.....(ग्रहोऽलिँटि दीर्घः)

❖ **नलोपः**
भ्रंश्— भ्रष्टः
मन्थ्— मथितः

- ➢ अनिदितां हल उपधायाः क्ङिति

❖ **अनुनासिकलोपः**
नम्— नतः
गम्— गतः
रम्— रतः

- ➢ अनुदात्तोपदेश......

❖ **नत्वम्**
भिद्— भिन्नः
पॄ— पूर्णः
द्रा— द्राणः
लू— लूनः
मस्ज्— मग्नः

- ➢ रदाभ्यां निष्ठातो नः पूर्वस्य च दः
- ➢ संयोगादेरातो धातोर्यण्वतः
- ➢ ल्वादिभ्यः
- ➢ ओदितश्च

❖ **इत्वम्**
मा— मितः
स्था— स्थितः

- ➢ द्यतिस्यतिमास्थामित् ति किति

❖ **ईत्वम्**
पा— पीतः
हा— हीनः

- ➢ घुमास्थागापाजहातिसां हलि

❖ **विविधकार्याणि (कत्वम्, मत्वम्, वत्वम् इत्यादीनि)**
शुष्— शुष्कः, क्षै— क्षामः, पच्— पक्वः।

- ✓ क्त-क्तवतुँ-क्त्वाप्रत्ययानाम् वलाद्यार्धधातुकत्वाद् ‘आर्धातुकस्येड् वलादेः’ इति सूत्रेण इट् प्राप्नोति।
- ✓ किन्वत्र निष्ठाप्रकरणे आदौ ‘एकाच उपदेशेऽनुदात्तात्’ ‘यस्य विभाषा’ ‘श्वीदितो निष्ठायाम्’ ‘श्र्युकः किति’ इत्यादि सूत्रैर्निषेधादिकं विचारणीयम्।

- ✓ जश्त्वम्, चर्त्वम्, कुत्वम्, श्चुत्वम्,ढत्वम्, धत्वम्, घत्वम् इत्यादि यथाविहितं सन्धिकार्याणि करणीयान्येव।

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# क्तवतुँप्रत्ययस्य प्रयोगविज्ञानम्



क्तवतुँ (तवत्)— भूतकाले कर्तरि च भवति।

| कर्तरि भूते तिङन्तप्रयोगः | कर्तरि भूते क्तवतुँप्रयोगः |
|---|---|
| रामः पुस्तकम् अपठत्। त्वं पुस्तकम् अपठः। अहं पुस्तकम् अपठम्। | रामः पुस्तकं पठितवान्। त्वं पुस्तकं पठितवान्। अहं पुस्तकं पठितवान्। |
| रामः पुस्तकम् अपठत्। सीता पुस्तकम् अपठत्। रघुकुलं पुस्तकम् अपठत्। | रामः पुस्तकं पठितवान्। सीता पुस्तकं पठितवती। रघुकुलं पुस्तकं पठितवत्। |
| जनाः रामं अस्तुवन्। बालिकाः गीतम् अगायन्। गर्गकुलानि जलम् अपिबन्। | जनाः रामं स्तुतवन्तः। बालिकाः गीतं गीतवत्यः। गर्गकुलानि जलम् पीतवन्ति। |

- ❖ भूतार्थे धातोः क्तवतुँप्रयोगो भवति। क्त्वन्तशब्दाः प्रातिपदिकाः सन्ति अतः पुरुषव्यवस्थायाः कोऽपि प्रभावो न भवति। तस्मात् त्रिषु पुरुषेषु समानमेव रूपं धारयन्ति।
- ❖ अयं प्रत्ययः कर्तरि भवति तेन कर्त्रनुसारं लिङ्गवचनव्यवस्था भवति।

❖ कर्तृवाच्ये भवेद् धातोरतीते 'क्तवतुः' सदा ।
भावे कर्मणि वाच्ये 'क्तः' कर्तृवाच्येऽपि कुत्रचित् ॥

❖ कर्तरि यथा –
मथुरां गतवान् कृष्णः, आयाता मधुयामिनी ।
श्रुतवान् स पितुर्वाक्यं, शैशवे क्रीडिता वयम् ॥

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# लघुसिद्धान्तकौमुद्याम् (कृदन्ते पूर्वकृदन्तम्)

## क्तवत्वन्तस्य गतवत्-शब्दस्य त्रिषु लिङ्गेषु रूपाणि

| | | | |
|---|---|---|---|
| पु.<br>स्त्री.<br>नपुं. | गतवान्<br>गतवती<br>गतवत्-द् | गतवन्तौ<br>गतवत्यौ<br>गतवती | गतवन्तः<br>गतवत्यः<br>गतवन्ति |
| पु.<br>स्त्री.<br>नपुं. | हे गतवान्<br>हे गतवति<br>गतवत्-द् | हे गतवन्तौ<br>हे गतवत्यौ<br>गतवती | हे गतवन्तः<br>हे गतवत्यः<br>गतवन्ति |
| पु.<br>स्त्री.<br>नपुं. | गतवन्तम्<br>गतवतीम्<br>गतवत्-द् | गतवन्तौ<br>गतवत्यौ<br>गतवती | गतवतः<br>गतवतीः<br>गतवन्ति |
| पु.<br>स्त्री. | गतवता<br>गतवत्या | गतवद्भ्याम्<br>गतवतीभ्याम् | गतवद्भिः<br>गतवतीभिः |
| पु.<br>स्त्री. | गतवते<br>गतवत्यै | गतवद्भ्याम्<br>गतवतीभ्याम् | गतवद्भ्यः<br>गतवतीभ्यः |
| पु.<br>स्त्री. | गतवतः<br>गतवत्याः | गतवद्भ्याम्<br>गतवतीभ्याम् | गतवद्भ्यः<br>गतवतीभ्यः |
| पु.<br>स्त्री. | गतवतः<br>गतवत्याः | गतवतोः<br>गतवत्योः | गतवताम्<br>गतवतीनाम् |
| पु.<br>स्त्री. | गतवति<br>गतवत्याम् | गतवतोः<br>गतवत्योः | गतवत्सु<br>गतवतीषु |

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# क्तप्रत्ययस्य प्रयोगविज्ञानम्

लघुसिद्धान्तकौमुद्याम् (कृदन्ते पूर्वकृदन्तम्)

क्त

## सकर्मकेभ्यः

- ✓ सकर्मकेभ्यः अयं कर्मणि भवति।
- ✓ तेन कर्मणः उक्तत्वात् कर्मवाचकपदात् प्रथमा कर्तुरनुक्तत्वात् कर्तृवाचकपदात् तृतीया विभक्तिर्भवति।
- ✓ क्तान्तपदात् लिङ्गवचनव्यवस्था कर्मवाचकपदानुगुणं (विशेष्यानुगुणम्) भवति।

त्वया/युवाभ्याम्/युष्माभिः/ मया/ आवाभ्याम्/अस्माभिः/ तेन/ताभ्याम्/ तैः

विष्णुः स्तुतः।

| | | |
|---|---|---|
| त्वया देवः स्तुतः।<br>मया देवौ स्तुतौ।<br>तेन देवाः स्तुताः। | त्वया देवी स्तुता।<br>मया देव्यौ स्तुते।<br>तेन देव्यः स्तुताः। | त्वया कार्यं स्तुतम्।<br>मया कार्ये स्तुते।<br>तेन कार्याणि स्तुतानि। |

## अकर्मकेभ्यः

- ✓ अकर्मकेभ्यः अयं भावे= क्रियायां भवति।
- ✓ तस्मात् कर्तुरनुक्तत्वात् कर्तृवाचकपदात् तृतीया विभक्तिर्भवति।
- ✓ क्तान्तपदात् सर्वदा नपुंसकलिङ्गैकवचनं भवति।

त्वया/युवाभ्याम्/युष्माभिः/ मया/ आवाभ्याम्/अस्माभिः/ तेन/ताभ्याम्/ तैः

स्नातम्। सुप्तम्। लज्जितम्। कम्पितम्।

कर्तृवाच्ये भवेद् धातोरतीते 'क्तवतुः' सदा ।
भावे कर्मणि वाच्ये 'क्तः' कर्तृवाच्येऽपि कुत्रचित् ॥

कर्तरि यथा –

मथुरां गतवान् कृष्णः, आयाता मधुयामिनी ।
श्रुतवान् स पितुर्वाक्यं, शैशवे क्रीडिता वयम् ॥

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः



# क्तप्रत्ययस्य विशेषनियमाः

गत्यर्थकात्, अकर्मकात्, श्लिषः, उपसर्गविशिष्टेभ्यः शीङ्-स्था-आस्-वस्-जन्-रुह्-जॄ-धातुभ्यः कर्तृवाच्येऽपि क्तप्रत्ययो भवति।
यथा— सः गतः/तेन गतम्।
स सुप्तः/तेन सुप्तम्।
सः गृहं गतः।

इच्छा-पूजा-ज्ञानार्थकधातुभ्यः वर्तमानेऽपि क्तप्रत्ययो भवति।
यथा— रामः प्रजानां इष्टः मतः पूजितः। (प्रजा राम को चाहती, मानती तथा पूजती है।)

भावे कर्मणि च यथा -

प्रातरत्र मया स्नातं भवता शयितं कथम्।
अधीतः शिशुभिः पाठः, उक्तं तैर्मधुरं वचः ॥

अयमत्र संग्रह :-

"अतीते क्तः प्रजायेत वाच्ययोर्भावकर्मणोः।
वर्तमानेऽपि पूजेच्छाज्ञानाद्यर्थकधातुषु ॥
गत्यर्थाकर्मकश्लिष्-शी- स्थास्-वस्- जन - जॄ - रुहां तथा ।
कर्तर्ण्यपि भवत्येष तथाऽऽरम्भे च कर्मणाम् ॥
गत्यर्थाकर्मकेभ्यश्चाशनार्थेभ्यस्तथा पुनः ।
वाच्येऽधिकरणेऽप्येवं 'क्त'प्रत्ययविधिः स्मृतः ॥"

अतीते भावे — मया स्नातम् अतीते कर्मणि— पाण्डवैः कौरवाः पराजिताः। वर्तमाने — अयं सतां पूजितः। कर्तरि — असौ मृतः । कर्मणामारम्भे- प्रद्योतितो भानुः । अधिकरणे - इदं गुरोः आसितम् इत्यादि ॥

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# कानच्-क्वसुँप्रत्यययोर्विधानम्



**लिँडादेशौ**

कानच् → आत्मनेपदिधातुषु

क्वसुँ → परस्मैपदिधातुषु

कृ+ लिँट्
कृ+ कानच्
कृ+ आन
कृ कृ+ आन
च कृ+ आन
च क्र्+ आन
चक्रान
चक्राणः

❖ परस्मैपदी
गम्+ लिँट्
गम्+ क्वसुँ
गम्+ वस्
गम् गम्+ वस्
जगम्+ वस्
इट्पक्षे गमहनजन..
इत्युपधालोपे—
जग्मिवस्

इड् अभावे—
जगम्+ वस्
जगन्+ वस्
जगन्वस्+ सुँ
जगन्व नुँम् स्+ सुँ
जगन्वा न् स्+ स्
जगन्वान्

{मूलपाठः}

❖ कानच्-क्वसुँ-विधायके विधिसूत्रे—

सूत्रम्— लिँटः कानज्वा (३,२.१०६)

सूत्रम्— क्वसुँश्च (३,२.१०७)

अर्थः— लिँटः कानच् क्वसुँश्च वा स्तः। तङानावात्मनेपदम्। चक्राणः॥

❖ नकारविधायकं विधिसूत्रम् —

सूत्रम्— म्वोश्च (८,२.६५)

अर्थः— मान्तस्य धातोर्नत्वं म्वोः परतः। जगन्वान्॥

आर्धधातुकस्येड् वलादेः।
नेड्वशि कृति।
क्रादिनियमेन पुनः प्राप्तिः
वस्वेकाचाद्घसाम्— इण्निषेधः।
विभाषा गम्-हन्-विद्-विशाम्— वेट्

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# लँडादेशयोः शतृँशानच्प्रत्यययोः (वर्तमाने) प्रक्रिया



## लँडादेशौ

शतृँ (अत्) -- -- शानच् (आन)

सार्वधातुकसञ्ज्ञकौ

परस्मैपदिधातुषु आत्मनेपदिधातुषु

उभयपदिधातुषु

❖ द्वितीयान्तेन सह समाधिकरणस्योदहरणम्—

**पचन्तं चैत्रं पश्य**

❖ उभयपदी

पच्+ लँट्

पच् (शप् )+ शतृँ

पच् अ+ अत्= पचत्

पच न् त्+ स्= पचन्



{मूलपाठः}

❖ शतृँशानच्-विधायकं विधिसूत्रम्—

**सूत्रम्—** लँटः शतृँशानचावप्रथमासमानाधिकरणे (३,२.१२४)

**अर्थः—** अप्रथमान्तेन समानाधिकरणे लँट एतौ वा स्तः। शबादि। पचन्तं चैत्रं पश्य॥

❖ मुँक्-आगमविधायकं विधिसूत्रम् —

**सूत्रम्—** आने मुँक् (७,२.८२)

**अर्थः—** अदन्ताङ्गस्य मुँगागमः स्यादाने परे। पचमानं चैत्रं पश्य।

पच्+ लँट्

पच् (शप् )+ शानच्

पच् अ+ आन

पच् अ मुँक्+ आन =

**पचमानः**

3-पचता चैत्रेण मोदकं भुक्तम्।

4-पचते चैत्राय फलानि देहि।

5-पचतः चैत्राद् अधीतम्।

6-पचतः चैत्रस्य प्रवचनम्।

7- पचति चैत्रे सर्वे गुणाः दृश्यन्ते।

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# लँडादेशयोः शतृँशानच्प्रत्यययोः प्रक्रिया

लघुसिद्धान्तकौमुद्याम् (कृदन्ते पूर्वकृदन्तम्)

❖ परस्मैपदी (असँ भुवि)

अस्+ लँट्

अस्+ शतृँ

अस् (शप्)+ अत्

स्+ अत् (श्नसोरल्लोपः)

सत्+ सुँ

1.सन् (द्विजः)

2. अस्ति (द्विजः)

❖ परस्मैपदी (विदँ ज्ञाने)

विद्+ लँट्

विद्+ शतृँ

विद् (शप्)+ शतृँ

विद् + वस्= विद्वस्

विद्वस्+ सुँ

1.विद्वान्

विद्+ शतृँ

विद्+ अत्

विदत्= 2.विदन्

➢ ('वर्तमाने लँट्' इति पूर्वसूत्रात्) लँडित्यनुवर्तमाने पुनर् (लँटः शतृँशानचावप्रथमासमानाधिकरणे इति सूत्रे) लँड्ग्रहणात् (अधिकविधानार्थम्) प्रथमासामानाधिकरण्येऽपि क्वचित् (शतृँ-शानचोर्विधानं प्रयोगेषु दृश्यते)— सन् द्विजः॥

❖ वसुँ-आदेशविधायकं विधिसूत्रम्—

सूत्रम्— विदेः शतुर्वसुँ (७,१.३६)

अर्थः— वेत्तेः परस्य शतुर्वसुरादेशो वा। विद्वान् । विदन्॥

{मूलपाठः}

❖ आत्मनेपदी (वृधुँ वर्धने) शानच्

1.वर्धमानः (स्नेहः)

2. वर्धते (स्नेहः)

❖ आत्मनेपदी (एधँ वृद्धौ) शानच्

1.एधमानः (अग्निः)

2. एधते (अग्निः)

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# लृँडादेशयोः शतृँशानच्प्रत्यययोः (भविष्ये) प्रक्रिया



| ❖ उभयपदी (डुकृञ् करणे) | ❖ उभयपदी (डुकृञ् करणे) |
| --- | --- |
| कृ+ लृँट् | कृ+ लृँट् |
| कृ स्य + शतृँ | कृ स्य + शानच् |
| कृ इ ष्य+ अत् | कृ इ ष्य+ आन |
| करिष्यत्+ अत् | करिष्य म्+ आन |
| करिष्यत् + सुँ | करिष्यमाण + सुँ |
| **करिष्यन्** | **करिष्यमाणः** |

{मूलपाठः}

❖ सत्-सञ्ज्ञाविधायकं सञ्ज्ञासूत्रम्—

सूत्रम्— **तौ सत्** (३,२.१२७)

अर्थः— तौ शतृँशानचौ सत्सञ्ज्ञौ स्तः॥

❖ वैकल्पिकसत्प्रत्ययविधायकं विधिसूत्रम्—

सूत्रम्— **लृँटः सद्वा** (३,३.१४)

अर्थः— लृँटः स्थाने सत्सञ्ज्ञौ शतृँ-शानचौ वा स्तः।

व्यवस्थितविभाषेयम्। तेनाप्रथमासामानाधिकरण्ये प्रत्ययोत्तरपदयोः सम्बोधने लक्षणहेत्वोश्च नित्यम्—करिष्यन्तं करिष्यमाणं पश्य॥

**भाव-अभावान्यतरविधायकत्वं व्यवस्थितविभाषात्वम्।**

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# विविधगणपठितधातुभिः सह शतृँशानच्प्रत्यययोः योजनम्

## लघुसिद्धान्तकौमुद्याम् (कृदन्ते पूर्वकृदन्तम्)

### ❖ भ्वादिगणे (शप्)

| परस्मैपदी | आत्मनेपदी |
|---|---|
| भू शप्+ शतृँ | एध् शप्+ शानच् |
| भू अ+ अत् | एध् अ म्+ आन |
| भवत् | एधमान |

### ❖ अदादिगणे (शपो लुक्)

| परस्मैपदी | उभयपदी |
|---|---|
| अद् ~~शप्~~+ शतृँ | दुह् ~~शप्~~+ शानच् |
| अद्+ अत् | दुह् + आन |
| अदत् | दुहान |

### ❖ जुहोत्यादिगणे (शपः श्लुः)

| परस्मैपदी | उभयपदी |
|---|---|
| हु हु ~~शप्~~+ शतृँ | दा दा ~~शप्~~+ शानच् |
| जुहु+ अत् | ददा + आन |
| जुह्वत् | ददान |

### ❖ दिवादिगणे (श्यन्)

| परस्मैपदी | आत्मनेपदी |
|---|---|
| दिव् श्यन्+ शतृँ | युध् श्यन् +शानच् |
| दिव् य + अत् | युध् य म्+ आन |
| दीव्यत् | युध्यमान |

### ❖ स्वादिगणे (श्नु)

| उभयपदी | उभयपदी |
|---|---|
| सु श्नु+ शतृँ | चि श्नु+ शानच् |
| सु नु+ अत् (हुश्नुवोः सार्वधातुके) | चि नु + आन |
| सुन्वत् | चिन्वान |

### ❖ तुदादिगणे (श)

| उभयपदी | उभयपदी |
|---|---|
| तुद् श+ शतृँ | तुद् श + शानच् |
| तुद् अ+ अत् | तुद् अ म् + आन |
| तुदत् | तुदमान |

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# विविधगणपठितधातुभिः सह शतृँशानच्प्रत्यययोः योजनम्

## लघुसिद्धान्तकौमुद्याम् (कृदन्ते पूर्वकृदन्तम्)

### ❖ रुधादिगणे (श्नम्)

| उभयपदी | उभयपदी |
|---|---|
| रु श्नम् ध्+ शतृँ | भि श्नम् द् + शानच् |
| रु न् ध्+ अत् | भि न द् + आन |
| रुन्धत् (श्नसोरल्लोपः) | भिन्दान |

### ❖ तनादिगणे ( उः )

| उभयपदी | उभयपदी |
|---|---|
| तन् उ + शतृँ | कृ उ + शानच् |
| तन् उ+ अत्(अत उत् सार्वधातुके) | कुर् उ + आन |
| तन्वत् | कुर्वाण |

### ❖ क्र्यादिगणे ( श्ना )

| उभयपदी | उभयपदी |
|---|---|
| क्री श्ना + शतृँ | ग्रह् श्ना + शानच् |
| क्री न् + अत् (श्नाभ्यस्तयोरातः) | गृह् न् + आन |
| क्रीणत् | (ग्रहिज्या..) गृह्णान |

### ❖ चुरादिगणे/णिजन्तप्रक्रियायाम् (णिच्+शप्)

| उभयपदी | उभयपदी |
|---|---|
| चुर् णिच् शप्+शतृँ | गण् णिच् शप्+शानच् |
| चोरि अ+ अत् | गणि अ म्+ आन |
| चोरे अ+ अत् | गणे अ म्+ आन |
| चोरयत् | गणयमान |

### ❖ सन्नन्तप्रक्रियायाम् (सन्)

| परस्मैपदी | आत्मनेपदी |
|---|---|
| पठ् सन्+ शतृँ | एध सन् +शानच् |
| पठ् पठ् स अ+अत् | ए धि धि स अ+ अत् |
| पिपठिष+ अत् | एदिधिष म्+ आन |
| पिपठिषत् | एदिधिषमाण |

### ❖ यङन्तप्रक्रियायाम् (यङ्) आत्मनेपदी

| | |
|---|---|
| भू य+ शानच् | दीप य + शानच् |
| बोभूय अ म्+आन | देदीप्य अ म् + आन |
| बोभूयमान | देदीप्यमान |

### यङन्तलुगन्तप्रक्रियायाम् (यङ्लुक्) परस्मैपदी

| | |
|---|---|
| भू य अ + शतृँ | कृ य अ + शतृँ |
| बोभू य + अत् | चर्कर् + अत् |
| बोभवत् | चर्करत् |

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# शतृँशानच्प्रत्यययोः गुणव्यवस्था

लघुसिद्धान्तकौमुद्याम्
(कृदन्ते पूर्वकृदन्तम्)

शतृँशानच्प्रत्ययौ अपित्सार्वधातुकौ स्तः अतः उभौ प्रत्ययौ ङिद्वत् स्तः।

शतृँशानच्प्रत्यययोः परतः यत्र धातोः शप्-विहितः तत्र शपः पित्वाद् ङिद्वत्वं नातिदिश्यते तेन गुणो भविष्यति। यथा—
जि शप्+ शतृँ > जे अ+ अत्= जयत् । शुभ् शप्+ शानच् > शोभ् अ म+ आन= शोभमान।

श्यन्-श्नु-श्ना-शविकरणानामपित् सार्वधातुकत्वाद्गुणो न।
यथा— कुप् श्यन्+ शतृँ = कुप्यत् ।
चि नु + शतृँ = चिन्वत्।
मिल् श+ शतृँ = मिलत्।
क्री श्ना + शानच् = क्रीणान।

❖ अदादिजुहोत्यादिरुधादिगणीयधातोरपि सत्परे गुणो न।

तनादिगणीयधातोः उप्रत्यये परतः वैकल्पिकगुणविधानम्।
यथा— क्षिण् उ+ शतृँ >
क्षेण् उ+ अत् =
क्षेण्वत्,क्षिण्वत् ।

❖ कुर्वतः, कुर्वाणः।
(अत उत् सार्वधातुके)

यस्माद्धातोः गुणस्य वृद्धेर्वा विशेषविधानं तत्तु सत्प्रत्यये परे भवत्येव । यथा—

❖ शीङः सार्वधातुके गुणः— शी >शे + आन= शयान ।
❖ मिदेर्गुणः— मिद्> मेद् य + अत् = मेद्यत्।

संस्कृतसारः

छिद्यन्ते सर्वसंशयाः

# शतृँशानच्प्रत्यययोर् विविधकार्याणां सङ्ग्रहः

लघुसिद्धान्तकौमुद्याम् (कृदन्ते पूर्वकृदन्तम्)

शतृँशानच्प्रत्यययोः परतः यथासम्भवं धात्वादेशा भवन्ति।यथा—

- पा[1]घ्रा[2]ध्मा[3]स्था[4]म्ना[5]दाण्[6]दृश्य[7]र्ति[8]सर्ति[9]शद[10]सदां[11]
पिब[1]जिघ्र[2]धम[3]तिष्ठ[4]मन[5]यच्छ[6]पश्य[7]र्च्छ[8]धौ[9]शीय[10]सीदाः[11]
पा+शप्+ शतृँ= पिबत्। घ्रा— जिघ्रत्। ध्मा— धमत्। स्था— तिष्ठत्। दाण्— यच्छत्। दृश्— पश्यत्। सृ— धावत्। शद्— शीयमान। सद्— सीदत्।
- ज्ञाजनोर्जा— ज्ञा+श्ना+ शतृँ= जानत्। शानच् = जानान।
जन्+श्यन्+ शानच् = जायमान।
- इषुगमियमां छः— इष्+श+ शतृँ= इच्छत्।
गम्+शप्+ शतृँ= गच्छत्।
यम्+शप्+ शतृँ= यच्छत्।
- श्रुवः शृ च— श्रु + श्नु + शतृँ= शृण्वत्।
- शतृँशानच्प्रत्यययोः सार्वधातुकत्वात् 'अस्तेर्भूः' 'ब्रुवो वचि' इत्यादीनामार्धातुकनिमित्तकानां नात्र प्रवृत्तिः।
अस्— सत्।
ब्रू— ब्रुवत्, ब्रुवाण।

- उपधाकार्याणि— गम-हन-जन-खन-घसां लोपः क्ङित्यनङि।
हन्— शतृँ= घ्नत्। (उपधालोपः, कुत्वम्)
- उपधादीर्घः— शमाष्टानां दीर्घः श्यनि।
शम्+श्यन्+ शतृँ = शाम्यत्। श्राम्यत्। भ्राम्यत्,भ्रमत्।
- ह्रस्वः— प्वादीनां ह्रस्वः।
पू(ञ्)+श्ना+ शतृँ= पुनत्। शानच्— पुनान।
लू(ञ्)+श्ना+ शतृँ= लुनत्। शानच्— लुनान।
- नुँम्— शे मुचादीनाम् ।
मुच् + श + शतृँ= मुञ्चत्। शानच्— मुञ्चमान।
सिच् + श + शतृँ= सिञ्चत्। शानच्— सिञ्चमान।
विद् + श + शतृँ= विन्दत्। शानच्— विन्दमान।
लुप् + श + शतृँ= लुम्पत्। शानच्— लुम्पमान।

# शतृँशानच्प्रत्यययोः कर्मवाच्यम्

अनभिधानात् शतृँशानच्प्रत्यययोः भाववाच्यं न भवति।

कर्मवाच्ये सर्वदा आत्मनेपदं भवति। तेनात्र शानजेव भवति न तु शतृँ।

- पठ्+ यक्+ शानच्> पठ्+ य+म्+ आन = पठ्यमानः (श्लोकः)।
- दृश्—दृश्यमानं (वस्तु)।
- आ+स्वद्—आस्वाद्यमानः (रसः)।
- भक्ष्— भक्ष्यमाणा (यवागूः)।
- गम्— गम्यमानः (मार्गः)।
- स्तु— स्तूयमानः (नरपतिः)।
- अव+लोक् — अवलोक्यमानं (दृश्यम्)।
- उप+ईक्ष्— उपेक्ष्यमाणः (व्याधिः)।
- दा— दीयमानं (धनम्)।
- कृ— क्रियमाणं (कार्यम्)।
- पाठि+ यक्+ शानच्> पाठ्+ य+म्+ आन = पाठ्यमानः (श्लोकः)।
- पिपठिष्+ यक्+ शानच्> = पिपठिष्यमाणः (श्लोकः)।

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# भविष्यत्काले शतृँशानच्प्रत्यययोः प्रयोगः

लघुसिद्धान्तकौमुद्याम्
(कृदन्ते पूर्वकृदन्तम्)

लृँटि धातूनां यथारूपं भवति तस्य ‘स्य-’ अन्तभागस्य शतृँ-शानच्-प्रत्यययोः कृतयोः रूपसिद्धिः भवति। यथा—

- ❖ कृ— करिष्य+शतृँ= करिष्यत् ।
- ❖ भू— भविष्य+अत्= भविष्यत् ।
- ❖ मृ— मरिष्य+अत्= मरिष्यत् ।
- ❖ गम्— गमिष्य+अत्= गमिष्यत् ।
- ❖ स्था— स्थास्य+अत्= स्थास्यत् ।
- ➢ कृ— करिष्य म्+शानच्= करिष्यमाण।
- ➢ ग्रह्— ग्रहीष्य म्+आन= ग्रहीष्यमाण।
- ➢ युध्— योत्स्य म्+आन= योत्स्यमान।
- ➢ लभ— लप्स्य म्+आन= लप्स्यमान।
- ➢ नी— नेष्य म्+आन= नेष्यमाण।
- ➢ प्र+स्था— प्रस्थास्य म्+आन= प्रस्थास्यमान।

- ❖ योत्स्यमानानवेक्षेऽहं य एतेऽत्र समागताः। (गीता-१.२३)
- ❖ कृतप्रणामस्य महीं महीभुजे जितां सपत्नेन निवेदयिष्यतः।
  (किरातार्जुनीयम्- १.२)
- ❖ विद्या प्रवसतो मित्रं भार्या मित्रं गृहे सतः।
  आतुरस्य भिषङ् मित्रं दानं मित्रं मरिष्यतः॥
  (वनपर्व यक्षयुधिष्ठिरसंवादः, आरणेयाख्यानपर्व-४१)
- ➢ सः कार्यं करिष्यन् अस्ति। (वह काम करने वाला है।)
- ➢ सः कार्यं कारयिष्यन् अस्ति। (वह काम कराने वाला है।)
- ➢ सः कार्यं करिष्यन् आसीत्। (वह काम करने वाला था।)
- ➢ सः कार्यं करिष्यन् भविष्यति। (वह काम करने वाला होगा।)
- ➢ रामेण सेविष्यमाणः विश्वामित्रः। (कर्मणि)
- ➢ अस्माभिः भोक्ष्यमाणानि फलानि। (कर्मणि)
- ➢ वेदः पाठयिष्यमाणः अस्ति।
- ➢ गीता पाठयिष्यमाणा अस्ति।
- ➢ रघुवंशं पाठयिष्यमाणम् अस्ति।

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# शतृँशानच्प्रत्ययान्तानां रूपाणि

लघुसिद्धान्तकौमुद्याम् (कृदन्ते पूर्वकृदन्तम्)

पुँल्लिङ्गे शतृँप्रत्ययान्तानां रूपाणि 'भवत्' इति शब्दवत् भवन्ति।

अभ्यस्तसञ्ज्ञकानां रूपाणि ददत् वत्

नपुंसकलिङ्गे शतृँप्रत्ययान्तानां रूपाणि 'जगत्' इति शब्दवत् भवन्ति।

- ❖ स्त्रीलिङ्गे शतृँप्रत्ययान्तानां रूपाणि नदीशब्दवद्भवन्ति।
- ❖ किन्तु स्त्रीलिङ्गे नुँमागमस्य विशेषविधानमस्ति। अतः नुँमागमम् अविज्ञाय शतृँप्रत्ययान्तानां रूपाणि ज्ञेयानि न स्युः। नुँमागमस्य नियमाः—
- ✓ येभ्यः धातुभ्यः शप्स्यनौ (भ्वादौ दिवादौ चुरादौ) भवतस्तत्र 'शप्श्यनोर्नित्यम्' इति सूत्रेण नित्यनुँमागमः। यथा— भू> भवन्ती, गम्> गच्छन्ती, पठ्> पठन्ती। दिव्> दीव्यन्ती, कुप्> कुप्यन्ती। चुर्> चोरयन्ती।
- ✓ तुदादिभ्यः आकारान्त-अदादिभ्यः नुँमागमः 'आच्छीनद्योर्नुँम्' इति सूत्रेण विकल्पः। यथा— तुदती तुदन्ती। विन्दती विन्दन्ती। याती यान्ती। स्नाती स्नान्ती। भाती भान्ती। करिष्यती करिष्यन्ती।
- ✓ एतस्मादन्येभ्यः गणपठितधातुभ्यो नुँमागमो न भवति। जानती। शृण्वती। अदती। अश्नती। ददती। कुर्वती। इत्यादि।

पुँल्लिङ्गे शानच्प्रत्ययान्तानां रूपाणि 'राम'वत् स्त्रीलिङ्गे रमावत् नपुंसकलिङ्गे ज्ञान इति शब्दवत् भवन्ति।

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# शतृँशानच्-प्रयोगसङ्ग्रहः



**वर्तमानक्रियायां भवेतां शतृँशानचौ।**
**परस्मैपदिधातुभ्यः शतृँ स्यात् शानजन्यतः॥**

यथा— प्रयाति पथिको गायन् भ्राम्यन् गुञ्जति षट्पदः।
शयानश्चिन्तयत्येष कम्पमानः स भाषते॥

यदा तु पूर्वकालिक (अप्रधान) क्रियायाः उत्तरकालिक (प्रधान) क्रियायाश्च कार्यं सहैव= एकस्मिन्नेव काले भवति तदा पूर्वकालिकक्रिया शतृँप्रत्ययान्ता शानच्-प्रत्ययान्ता वा प्रयुज्यते। यथा— स नृत्यन् आयाति। अत्र नर्तन-आगमनक्रिययोः कार्यमेकस्मिन्नेव काले भवति।

❖ यदा तु पूर्वकालिकक्रियाकार्यम् उत्तरकालिकक्रियाकार्यतः प्रागेव सम्पन्नं भवति तदा तु पूर्वकालिकक्रिया 'क्त्वा'प्रत्ययान्ता 'ल्यप्'प्रत्ययान्ता वा प्रयोज्या। यथा– 'स गृहं गत्वा मामपश्यत्।' अत्र गमनकार्यं दर्शनकार्यतः प्रागेव सम्पद्यते। स पूर्वं गृहं गतः ततो मां दृष्टवान्। अतः गम्धातोः 'क्त्वा' प्रत्ययो भवति।

## गीतायाम्

- परमं पुरुषं दिव्यं याति पार्थानुचिन्तयन्।
- ॐ इत्येकाक्षरं ब्रह्म व्याहरन् मामनुस्मरन्।
  यः प्रयाति त्यजन् देहं स याति परमां गतिम्॥
- नैव किञ्चित्करोमीति युक्तो मन्येत तत्त्ववित्
  पश्यञ्शृण्वन्स्पृशञ्जिघ्रन्नश्नन्गच्छन्स्वपञ्श्वसन्॥
- प्रलपन्विसृजन्गृह्णन्नुन्मिषन्निमिषन्नपि।
  इन्द्रियाणीन्द्रियार्थेषु वर्तन्त इति धारयन्॥
- अनन्येनैव योगेन मां ध्यायन्त उपासते।
- यः स सर्वेषु भूतेषु नश्यत्सु न विनश्यति।
- न हन्यते हन्यमाने शरीरे।
- उत्क्रामन्तं स्थितं वापि भुञ्जानं वा गुणान्वितम्।
  विमूढा नानुपश्यन्ति पश्यन्ति ज्ञानचक्षुषः॥
- श्रद्दधाना मत्परमा भक्तास्तेऽतीव मे प्रियाः॥

# शतृँशानच्-प्रयोगसङ्ग्रहः



## दुर्गासप्तशत्याम्

- तस्य पालयतः सम्यक् प्रजाः पुत्रानिवौरसान्।
- अतीव तेजसः कूटं ज्वलन्तमिव पर्वतम्।
- निश्वासान् मुमुचे यांश्च युध्यमाना रणेऽम्बिका।
- अनायस्तानना देवी स्तूयमाना सुरर्षिभिः।
- नाशयन्तो ऽसुरगणान् देवीशक्त्युपबृंहिताः ।
  अवादयन्तः पटहान् गणाः शङ्खांस्तथापरे ॥
- निहन्यमानं तत्सैन्यमवलोक्य महासुरः।
- युद्धयमानौ ततस्तौ तु तस्मान्नागान्महीं गतौ ।
- एवं संक्षीयमाणे तु स्वसैन्ये महिषासुरः ।
- अर्धनिष्क्रान्त एवासौ युध्यमानो महासुरः।
- काप्यास्ते स्त्री महाराज भासयन्ती हिमाचलम् ।
- स्त्रीरत्नमतिचार्वङ्गी द्योतयन्ती दिशस्त्विषा।
- शृण्वतीं श्यामलाङ्गीम्। वल्लकीं वादयन्तीम्।

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# तच्छील-तद्धर्म-तत्साधुकारिकर्तृषु तृन्-प्रत्ययः

लघुसिद्धान्तकौमुद्याम् (कृदन्ते पूर्वकृदन्तम्)

**तच्छीलः—** स्वभावतः फलनिरपेक्षप्रवृत्तिः।
**तद्धर्मः—** तत्छीलं विनापि स्वकुलाचारः।
**तत्साधुकारी—** तत्छीलं तद्धर्मं विनापि क्रियाया उत्तमरूपेण सम्पादनकर्ता।

{मूलपाठः}

❖ तच्छील-तद्धर्म-तत्साधुकार्यर्थाधिकारसूत्रम्—

**सूत्रम्—** आक्वेस्तच्छील-तद्धर्म-तत्साधुकारिषु (३,२.१३४)

**अर्थः—** क्विँपमभिव्याप्य वक्ष्यमाणाः प्रत्ययास्तच्छीलादिषु कर्तृषु बोध्याः॥

❖ तृन्प्रत्ययविधायकं विधिसूत्रम्—

**सूत्रम्—** तृन् (३,२.१३४)

**अर्थः—** धातोः 'तृन्'प्रत्ययः स्यात् तच्छील-तद्धर्म-तत्साधुकार्यर्थेषु। कर्ता कटान्॥

कृ+ तृन्
कृ + तृ
(सार्वधातुकार्धधातुकयोः— गुणः)
कर्+ तृ=
कर्तृ+ सुँ
(ऋदुशनस्पुरुदंशोऽनेहसां च— अनँङ्)
कर्त् अन्+ स्
(सर्वनामस्थाने चासम्बुद्धौ— उपधादीर्घः)
कर्त् आन्+ स्
**कर्ता** (सकारनकारलोपौ)

- ✓ वदिता सत्यम्।
- ✓ कर्ता कलहम्।
- ✓ उपदेष्टा जनान्।
- ✓ गन्ता खेटम्।
- ✓ गोप्ता गृहम्।
- ✓ पक्ता भोजनम्।
- ✓ वक्त्री कथाम्।
- ✓ हासयित्री जनान्।
- ✓ संहन्त्री शत्रून्।
- ✓ वादयित्री मृदङ्गम्।

| तृच् | तृन् |
|---|---|
| ➢ सामान्यकर्तरि | तच्छीलादिविशेषकर्तरि |
| ➢ कर्मणि षष्ठी | कर्मणि द्वितीया |
| ➢ अन्तोदात्तः | आद्युदात्तः |

# तच्छील-तद्धर्म-तत्साधुकारिकर्तृषु षाकन्-उ-प्रत्ययौ



जल्प्+ षाकन्
जल्प्+ आक
जल्पाक+ स्
**जल्पाकः**

वृ+ षाकन्
वर्+ आक
वराक+ स्
**वराकः**

वराक+ ङीष्
वराक+ ई
वराक् + ई
**वराकी**

चिकीर्ष+ उ
चिकीर्ष्+ उ (अतो लोपः)
चिकीर्षु+ स्
**चिकीर्षुः**

आशंस्+ उ= आशंसुः
भिक्ष्+ उ= भिक्षुः

पठ्— पिपठिष= पिपठिषुः
ज्ञा— जिज्ञास= जिज्ञासुः
मुच्— मुमुक्ष= मुमुक्षुः
हन्— जिघांस= जिघांसु
गम्— जिगमिष= जिगमिषुः
वि+जि— विजिगीष= विजिगीषुः
पा— पिपास= पिपासुः
दृश्— दिदृक्ष= दिदृक्षुः

{मूलपाठः}

❖ षाकन्-प्रत्ययविधायकं विधिसूत्रम्—

**सूत्रम्— जल्प-भिक्ष-कुट्ट-लुण्ट-वृङः षाकन् (३,२.१५५)**

अर्थः— जल्पादिधातुभ्यः ‘षाकन्’प्रत्ययः स्यात् तच्छील-तद्धर्म-तत्साधुकारिकर्तृषु।

❖ षकारेत्सञ्ज्ञाविधायकं सञ्ज्ञासूत्रम्—

**सूत्रम्— षः प्रत्ययस्य (१,३.६)**

अर्थः— प्रत्ययस्यादिः ष इत्संज्ञः स्यात्।

जल्पाकः। भिक्षाकः। कुट्टाकः। लुण्टाकः। वराकः। वराकी॥

❖ उप्रत्ययविधायकं विधिसूत्रम्—

**सूत्रम्— सनाशंसभिक्ष उः (३,२.१६८)**

अर्थः— सन्नतेभ्यः धातुभ्यः आशंसेर्भिक्षेश्च ‘उ’प्रत्ययः स्यात् तच्छील-तद्धर्म-तत्साधुकारिकर्तृषु।

चिकीर्षुः। आशंसुः। भिक्षुः॥

१. ‘सन्’प्रत्ययान्तधातुभ्यः।
२. ‘आ+शंस्’ धातोः
३. ‘भिक्ष्’ धातोः

# तच्छील-तद्धर्म-तत्साधुकारिकर्तृषु क्विँप्-प्रत्ययः



वि+भ्राज्+ क्विँप्
विभ्राज्+सुँ (व्रश्च..)
विभ्राष्
विभ्राड्
विभ्राट्-ड्

भास्+ क्विँप्
भास्+ सुँ
भास्+
भाः

धुर्व्+ क्विँप्
धुर्व्+ स्
धुर्+ स्
धूः

वि+द्युत्+ क्विँप्
वि+द्युत्+ स्
विद्युत्

ऊर्ज्+णिच्+ क्विँप्
ऊर्ज्+ स्
ऊर्ग्
ऊर्क्-ग्

जु+ क्विँप्
जू+ स्
जूः

ग्रावस्तुत्+ क्विँप्
ग्रावस्तुत्

{मूलपाठः}

❖ क्विँप्-प्रत्ययविधायकं विधिसूत्रम्—

**सूत्रम्—** भ्राज-भास-धुर्वि-द्युतोर्जि-पॄ-जु-ग्रावस्तुवः क्विँप्।

**अर्थः—** भ्राजादि-अष्टभ्यः धातुभ्यः 'क्विँप्'प्रत्ययः स्यात् तच्छील-तद्धर्म-तत्साधुकारिकर्तृषु।

विभ्राट्। भाः॥

❖ छकार-वकारयोः लोपविधायकं विधिसूत्रम्—

**सूत्रम्—** राल्लोपः (६,४.२१)

**अर्थः—** रेफाच्छ्वोर्लोपः क्वौ, झलादौ क्ङिति (च)।

धूः। विद्युत्। ऊर्क्। पूः।

दृशिग्रहणस्यापकर्षाज्जवतेर्दीर्घः— जूः। ग्रावस्तुत्।

# तच्छील-तद्धर्म-तत्साधुकारिकर्तृषु क्विँप्-प्रत्ययः



{मूलपाठः}

❖ क्विँप्-दीर्घ-असम्प्रसारणविधायकं वार्तिकम्—

**वार्तिकम्—क्विँब् वचि-प्रच्छ्यायतस्तु-कटप्रु-जु-श्रीणां दीर्घोऽसम्प्रसारणं च।**

अर्थः— तच्छील-तद्धर्म-तत्साधुकारिकर्तृषु वच्-प्रच्छ्-आयतपूर्वकस्तु-कटपूर्वकप्रु-जु-श्री-एभ्यः षड्भ्यः धातुभ्यः 'क्विँप्'प्रत्ययो दीर्घोऽसम्प्रसारणं च स्यात् । वक्तीति वाक्॥

❖ तुंक्सहितछकारस्य स्थाने शकारस्तथा वकारस्य स्थाने ऊठ्-विधायकं विधिसूत्रम्—

**सूत्रम्— च्छ्वोः शूडनुनासिके च (६,४.१९)**

अर्थः— सतुँक्कस्य छस्य वस्य च क्रमात् 'श्, ऊठ्' इत्यादेशौ स्तोऽनुनासिके क्वौ झलादौ च क्ङिति।

पृच्छतीति— प्राट्। आयतं स्तौतीति— आयतस्तूः। कटं प्रवते— कटप्रूः। जूरुक्तः। श्रयति हरिं— श्रीः॥

वच्+ क्विँप्
वाच्+ सुँ
वाक्-ग्

प्रच्छ्+ क्विँप्
प्राच्छ्+ क्विँप्
प्राश् + सुँ
प्राष्
प्राट्-ड्

श्रि(ञ्)+ क्विँप्
श्री + सुँ
श्रीः

आयत+स्तु+ क्विँप्
आयत+स्तू+ सुँ
आयतस्तूः

कट+प्रु+ क्विँप्
कट+प्रू+ सुँ
कटप्रूः

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# करणे ष्ट्रन्-प्रत्ययः

लघुसिद्धान्तकौमुद्याम् (कृदन्ते पूर्वकृदन्तम्)

{मूलपाठः}

❖ ष्ट्रन्-प्रत्ययविधायकं विधिसूत्रम्—

सूत्रम्— दाम्-नी-शस-यु-युज-स्तु-तुद-सि-सिच-मिह-पत-दश-नहः करणे

अर्थः—दाबादेः ष्ट्रन् स्यात्करणेऽर्थे।

दात्यनेन— दात्रम्। नेत्रम्॥

❖ इण्निषेधकं विधिसूत्रम्—

सूत्रम्— ति-तु-त्र-त-थ-सि-सु-सर-क-सेषु च (७,२.९)

अर्थः— एषां दशानां कृत्प्रत्ययानामिण् न।

शस्त्रम्। योत्रम्। योक्त्रम्। स्तोत्रम्। तोत्त्रम्। सेत्रम्। सेक्त्रम्। मेढ्रम्। पत्त्रम्। दंष्ट्रा। नद्ध्री॥

❖ दाप् लवने

दा+ ष्ट्रन्

दा+ त्र

**दात्रम्**

❖ णीञ् प्रापणे

नी+ ष्ट्रन्

ने+ त्र

**नेत्रम्**

❖ मिहँ सेचने

मिह्+ ष्ट्रन्

मेढ्+ त्र (होढः)

मेढ्+ ध् र (झषः तथो..)

मेढ्+ ढ् र (ष्टुना ष्टुः)

मे+ ढ् र (ढो ढे लोपः)

**मेढ्रम्**

❖ पतॢँ गतौ

पत्+ ष्ट्रन्

पत्+ त्र

**पत्त्रम्**

❖ दंशँ दशने

दंशत्यनया

दंश्+ ष्ट्रन्

दंष्+ त्र (व्रश्च.) ष्टुत्वम्

**दंष्ट्रा** (अजादित्वाट्टाप्)

❖ णहँ बन्धने

नह्+ ष्ट्रन्

नध्+ त्र (नहो धः)

नध्+ ध् र (झषः तथो..)

नद्+ ध् र (जश्त्वं ङीष्) = **नद्ध्री**

## ष्ट्रन्

ष्- षः प्रत्ययस्य।

न्- हलन्त्यम्।

निमित्तापाये नैमित्तिकस्याप्यपायः= त्र

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# करणे इत्र-प्रत्ययः



{मूलपाठः}

❖ इत्र-प्रत्ययविधायकं विधिसूत्रम्—

सूत्रम्— अर्ति-लू-धू-सू-खन-सह-चर इत्रः (६,२.१८४)

अर्थः— अरित्रम्। लवित्रम्। धुवित्रम्। सवित्रम्। खनित्रम्। सहित्रम्। चरित्रम्॥

❖ सञ्ज्ञायाम्-इत्र-प्रत्ययविधायकं विधिसूत्रम्—

सूत्रम्— पुवः सञ्ज्ञायाम् (३,२.१८५)

अर्थः— पवित्रम्॥

॥ इति पूर्वकृदन्तम् ॥

❖ ऋ गतिप्रापणयोः

ऋ+ इत्र

अर्+ इत्र

**अरित्रम्**

❖ धू विधूनने

धू+ इत्र (गाङ्कुटादि..)

धुव्+ इत्र (उवङ्)

**धुवित्रम्**

❖ षू प्रेरणे

सू+ इत्र

सो+ इत्र

**सवित्रम्**

❖ षहँ मर्षणे

सह्+ इत्र

**सहित्रम्**

❖ चरँ गतिभक्षणयोः

चर्+ इत्र

**चरित्रम्**

❖ पूँङ्/पूञ् पवने

पू+ इत्र

पो+ इत्र

**पवित्रम्**

# पूर्वकृदन्तपरीक्षणम्-१

**०१. 'ण्वुल्तृचौ' इति सूत्रेण विहितयः 'तृच्' प्रत्ययः कस्मिन्नर्थे भवति ?**

क. स्वार्थे

**ख.कर्तरि**

ग. कर्मणि

घ. भावे

**०२. कृ+ तृच्+ ङीप्= ............?**

क. कर्तृ

ख. कर्ती

**ग. कर्त्री**

घ. कर्ता

**०३. पचादेः कः प्रत्ययो भवति ?**

क. णिनि

ख. ण्वुल्

ग. ल्यु

**घ. अच्**

**०४. 'मन्त्री' इत्यत्र कः प्रत्ययः—**

**क. णिनिँ**

ख. तृच्

ग. ङीप्

घ. ष्ट्रन्

**०५. 'प्रियः' इत्यत्र को धातुः कश्च प्रत्ययः ?**

**क. प्रीञ् तर्पणे + क**

ख. प्रथँ प्रख्याने + क

ग. प्रीञ् तर्पणे + ट

घ. प्रथँ प्रख्याने + ट

**०६. 'गेहे कः' इति सूत्रेण कः प्रत्ययो भवति—**

**क. कः**

ख. अण्

ग. टः

घ. अच्

**०७. 'कुम्भकारः' अत्र कः प्रत्ययः—**

क. कः

**ख.अण्**

ग. ट

घ. अच्

**०८. एतेषु 'ट'प्रत्ययः कुत्र नास्ति—**

क. भिक्षाचरः।

ख. सेनाचरः।

**ग. सहचरः।**

घ. कुरुचरः।

**०९. 'वु' इत्यस्य स्थाने कः आदेशो विधीयते—**

**क. अक**

ख. अक्

ग. अन्

घ. अन

**१०. एतेष्वाकृतिगणो वर्त्तते—**

क. नन्दादिः।

ख. गृह्यादिः।

**ग. मूलविभुजादिः।**

घ. ल्वादिः।

**११. 'जनमेजयः' इत्यस्य सिद्धावसङ्गतं कथनं चिनुत ?**

क. 'ण्यन्त-एजृँ-कम्पने' धातोरयं सिद्ध्यति।

**ख.खच्-प्रत्यये कृतेऽयं सिद्ध्यति।**

ग. खश्- प्रत्यये कृतेऽयं सिद्ध्यति।

घ. मुँमागमे कृतेऽयं सिद्ध्यति।

**१२. 'श्राद्धकरः' इत्यत्र टप्रत्ययः कस्मिन्नर्थे—**

क. हेतौ

**ख.ताच्छील्ये**

ग. आनुलोम्ये

घ. करणे

**१३. 'अतः कृ-कमि-कंस-कुम्भ-पात्र-कुशा-कर्णीष्वनव्ययस्य' इति सूत्रेण किं विधीयते—**

**क. विसर्गस्य स्थाने नित्यं सादेशः।**

ख. आदुत्तरस्य विसर्गस्यानव्ययत्वम्।

ग. टप्रत्ययः।

घ. अणप्रत्ययः।

**१४. 'प्रियं वदतीति' इति विग्रहे खचप्रत्यये कृते किं रूपम्—**

क. प्रियवदः

ख. प्रियवादी

ग. प्रियः

**घ. प्रियंवदः**

**१५. 'सुशर्मा' इत्यत्र कः प्रत्ययः—**

क. आ

ख. मा

**ग. मनिँन्**

घ. विँच्

**१६. 'अवावा' इत्यत्र कः प्रकृतिः कश्च प्रत्ययः—**

क. अवा+ वा

**ख.ओण्+ वनिँप्**

ग. अवाव्+ आ

घ. अव्+ वा+क्विँप्

**१७. 'सुगण्' इत्यत्र कः प्रत्ययः—**

क. किमपि न

**ख.विँच्**

ग. क्विँप्

घ. अण्

**१८. एतेषु कस्य प्रत्ययस्य किमपि नावशिष्यते—**

क. मनिँन्

ख. क्वनिँप्

ग. वनिँप्

**घ. क्विँप्**

**१९. 'दर्शनीयमानी' इत्यत्र कः प्रत्ययः—**

क. मनिँन्

ख. क्वनिँप्

**ग. णिनिँ**

घ. यु

**२०. पण्डितमात्मानं मन्यते— इति विग्रहे किं रूपमसाधु ?**

क. पण्डितम्मन्यः

ख. पण्डितमानी'

ग. पण्डितंमन्यः

**घ. पण्डितमन्यः**

**२१. भूतार्थे णिनिँप्रत्ययः केन विधीयते—**

क. आत्ममाने खश्च

ख. सुँप्यजातौ णिनिस्ताच्छील्ये

**ग. करणे यजः**

घ. मनः

**२२. 'राजकृत्वा' इत्यत्र कः प्रत्ययः —**

क. क्त्वा

**ख.क्वनिँप्**

ग. टाप्

घ. वनिँप्

**२३. एतेषु कुत्र ङेरलुक्—**

**क. सरसिजम्**

ख. सरोजम्

ग. प्रजा

घ. वनजः

**२४. 'ड'प्रत्ययः न भवति—**

क. भूतार्थात् जन्-धातोः।

ख. सप्तम्यन्ते उपपदे।

ग. उपसर्गे उपपदे सञ्ज्ञायाम्।

**घ. उपसर्गे उपपदे असञ्ज्ञायामपि।**

**२५. निष्ठासञ्ज्ञकौ प्रत्ययौ कौ—**

क. शतृँ-शानचप्रत्ययौ

ख. ण्वुल्-तृच्प्रत्ययौ

**ग. क्त-क्तवतुँप्रत्ययौ**

घ. क-अणप्रत्ययौ

**०१. 'क्त'प्रत्ययः प्रायः कस्मिन्नर्थे भवति ?**

क. केवले भावे

ख. केवले कर्तरि

ग. केवले कर्मणि

**घ. भावकर्मणोः**

**०२. 'क्तवतुँ'प्रत्ययः प्रायः कस्मिन्नर्थे भवति ?**

क. केवले भावे

**ख.केवले कर्तरि**

ग. केवले कर्मणि

घ. भावकर्मणोः

**०३. भिद्+ क्त =......... ?**

**क.भिन्नः**

ख. भित्तः

ग. भिद्नः

घ. भेदः

**०४. 'शीर्णः' इत्यत्र को धातुः—**

क. शीङ्

ख. शीर्

**ग. शॄ**

घ. श्रिञ्

**०५. एतेषु कुत्र निष्ठा तकारस्य नकारो न भवति ?**

क. यण्वतः संयोगादेरातो धातोः

ख. ल्वादिधातुभ्यः

ग. ओदितधातुभ्यः

**घ. घुसञ्ज्ञकधातुभ्यः**

**०६. एतेष्वशुद्धं चिनुत—**

क. पच्— पक्वः

ख. क्षै— क्षामः

ग. धा— हितम् (घुसञ्ज्ञकः)

**घ. दा— दातः (घुसञ्ज्ञकः)**

**०७. 'दो दद् घोः' इत्यत्र भाष्यमते कः पाठः स्वीकृतः—**

क. दद्

ख. दध्

**ग. दथ्**

घ. दत्

**०८. 'पा पाने' इति धातोः निष्ठायां किं रूपम्—**

**क.पीतः**

ख. पीनः

ग. पातः

घ. पानः

**०९. शुद्धं वाक्यं चिनुत—**

क. त्वया देवी स्तुतः।

ख. मथुरां गतवत् कृष्णः

ग. अस्माभिः कम्पितः।

**घ. सः गृहं गतः।**

**१०. कानच्-प्रत्ययः कस्य स्थाने भवति—**

क. लँटः

ख. लृँटः

**ग. लिँटः**

घ. न कस्यापि

**११. 'जगन्वान्' इत्यत्र कः प्रत्ययः ?**

क. मतुँप्

**ख.क्वसुँ**

ग. क्तवतुँ

घ. क्वनिँप्

**१२. एतेषु लँट्-लृँट्लकारयोः स्थाने कः प्रत्ययः विधीयते—**

क. क्तवतुँ

**ख.शानच्**

ग. तृन्

घ. उः

**१३. उभयपदिधातुषु कः प्रत्ययो विधीयते—**

क. शतृँ

ख. शानच्

**ग. सत्सञ्ज्ञकौ प्रत्ययौ**

घ. षाकन्प्रत्ययः

**१४. 'लँटः शतृँशानचावप्रथमासमानाधिकरणे' इति सूत्रे 'वर्तमाने लँट्' इति पूर्वसूत्रात् लँडित्यनुवर्तमाने पुनर्लँड्ग्रहणं किमर्थम् ?**

क. प्रथमाविधानार्थम्

**ख.प्रथमासामानाधिकरण्येऽपि क्वचित् शतृँ-शानचोर्विधानार्थम्।**

ग. सत्सञ्ज्ञार्थम्

घ. 'पचन्तं चैत्रं पश्य' इति प्रयोगसिद्ध्यर्थम्।

**१५. 'सुशर्मा' इत्यत्र कः प्रत्ययः—**

क. आ

ख. मा

**ग. मनिँन्**

घ. विँच्

**१६. 'तृन्' इति प्रत्ययः कस्यार्थे न विधीयते—**

क. तच्छीलः

**ख.भावे**

ग. कर्तरि

घ. तत्साधुकारी

**१७. कृ + शानच् =..........?**

क. करमानः

ख. करणः

ग. क्रियाणः

**घ. कुर्वाणः**

**१८. 'देदीप्यमानः' इति कस्य धातोः रूपम् ?**

क. दा

ख. देप्

**ग. दीप्**

घ. दद्

**१९. एतेष्वशुद्धं रूपं चिनुत—**

क. दीव्यन्ती

ख. पठन्ती

ग. स्नाती

घ. कुर्वन्ती

**२०. एतेष्वशुद्धं रूपं चिनुत—**

क. स कम्पमानो भाषते।

ख. पथिको गायन् प्रयाति।

ग. सः कार्यं करिष्यन् आसीत्।

**घ. स जिघ्रमाणो वर्तते।**

**२१. प्रत्ययस्यादेः षकारस्य इत्सञ्ज्ञा केन सूत्रेण भवति—**

क. स प्रत्ययस्य

**ख.षः प्रत्ययस्य**

ग. लशक्वतद्धिते:

घ. आदेशप्रत्यययोः

**२२. 'तृन्'प्रत्यये कर्मणि का विभक्तिर्भवति —**

क. षष्ठी

**ख.द्वितीया**

ग. प्रथमा

घ. सप्तमी

**२३. अस्य सूत्रस्य शुद्धं स्वरूपं किम्—**

**क. दाम्-नी-शस-यु-युज-स्तु-तुद-सि-सिच-मिह-पत-दश-नहः करणे**

ख. दाम्-नी-शस-यु-युज-स्तु-सिच-मिह-तुद-सि- पत-दश-नहः करणे

ग. दाम्-नी-शस-यु-युज-स्तु-तुद-पत -सि-सिच-मिह -दश-नहः करणे

घ. दाम्-नी-शस-यु-युज-स्तु-तुद-सि-सिच-मिह-पत-दश-नहः वरणे

**२४. 'ति-तु-त्र-त-थ-सि-सु-सर-क-सेषु च' इति सूत्रेण किं विधीयते—**

क. ष्ट्रन्-प्रत्ययविधानम्।

ख. णत्वम्

**ग. इट्-निषेधः।**

घ. नपुंसकलिङ्गविधानम्।

**२५. 'चरित्रम्' इत्यत्र कः प्रत्ययः—**

क. त्रल्

ख. ष्ट्रन्

**ग. इत्र**

घ. क्त्रि

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# उण्-आदिप्रत्ययाः (विविधार्थेषु)

लघुसिद्धान्तकौमुद्याम्
(कृदन्ते उणादयः)

❖ डुकृञ् करणे
कृ+ उण्
क् आर्+ उ (अचो ञ्णिति)
कारु+ स्
कारुः

पाणिनेः पूर्वकाले शाकटायनमुनिप्रणीतानि सूत्राणि-उणादिसूत्राणि सन्ति। तेषां सङ्ख्या प्रायः सार्धसप्तशतं वर्तते। एतै सूत्रैः प्रायः सपाद-त्रिशतं प्रत्ययाः विधीयन्ते। एतेषां सूत्राणां विभाजनं पञ्चसु पादेषु दशसु पादेषु च प्राप्यते।

उणादिसूत्रम्— कृ-वा-पा-जि-मि-स्वदि-साध्यशूँभ्य उण्॥ १.१॥

{मूलपाठः}

करोतीति— कारुः। वातीति — वायुः। पायुर्गुदम्। जायुरौषधम्। मायुः पित्तम्। स्वादुः। साध्नोति परकार्यमिति — साधुः। आशु शीघ्रम्॥

❖ वा गतिगन्धनयोः
वा+ उण्
वा य्+ उ (आतो युँक् चिण्कृतोः)
वायु+ स्
वायुः

❖ जि जये
जि+ उण्
जै + उ
जाय् उ+ स्
जायुः

❖ डुमिञ् प्रक्षेपणे
❖ ष्वदँ आस्वादने
❖ साधँ संसिद्धौ

❖ अशूँङ् व्याप्तौ संघाते च
अश्+ उण्
आश् + उ (अत उपधायाः)
आशु+ स्
आशु (अयम् अर्थविशेषे पुंन्नपुंसकमपि)

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# उण्-आदिप्रत्ययाः (विविधार्थेषु)

लघुसिद्धान्तकौमुद्याम्
(कृदन्ते उणादयः)

* केचिदविहिता अप्यूह्या इत्युक्तम्, कथमूह्याः ? इति दर्शयति संज्ञास्वित्यादिना; अयं भावः—संज्ञासु संज्ञाशब्देषु धातुरूपाणि प्रकल्प्य ततः परं प्रत्ययाः कल्पनीयाः। प्रत्ययेष्वपि गुणवृद्धिसम्प्रसारणतदभावादिकार्यानुसारेण ञित्त्वं ङित्त्वं कित्त्वं चेत्याद्यनुबन्धं जानीयात्। एतदेवोणादिषु शास्त्रम्—शासनार्हमिति भावः। यथा 'ऋफिड्डः' इति संज्ञाशब्दः। अत्र 'ऋ' धातुः प्रकृतिः, फिड्डप्रत्ययः, गुणाभावदर्शनाच्च प्रत्ययस्य कित्त्वमित्याद्यूह्यते॥

❖ उण्-प्रत्ययविधायकं विधिसूत्रम्— {मूलपाठः}

**सूत्रम्—** उणादयो बहुलम्॥ (३,३.१)

**अर्थः—** एते वर्तमाने सञ्ज्ञायां च बहुलं स्युः।

केचिदविहिता अप्यूह्याः॥

सञ्ज्ञासु धातुरूपाणि प्रत्ययाश्च ततः परे।

कार्याद्विद्यादनूबन्धमेतच्छास्त्रमुणादिषु॥

॥ इत्युणादयः ॥

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# उत्तरकृदन्तप्रत्ययाः

लघुसिद्धान्तकौमुद्याम्
(कृदन्ते उत्तरकृदन्तम्)

| | | | | | |
|---|---|---|---|---|---|
| ०१.तुमुँन् | ०२.ण्वुल् | ०३. घञ् (३) | ०४. अच् | ०५.अप् | ०६.क्त्रि-मप् |
| ०७.अथुच् | ०८. नङ् | ०९. नन् | १०. कि | ११.क्तिन् | १२.क्विँप् |
| १३. अ | १४. युच् (२) | १५. क्त | १६. ल्युट् | १७. घ | १८. खल् |
| १९.क्त्वा | २०. ल्यप् | २१. णमुँल् | | | |

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# भावे तुमुन्, कर्तरि ण्वुल्-प्रत्ययः। (भविष्यत्काले)

लघुसिद्धान्तकौमुद्याम् (कृदन्ते उत्तरकृदन्तम्)

दृश्+ तुम्
द अम् श्+ तुम् (सृजिदृशो..)
द् र् अ श्+ तुम् (यण्)
द्रष्+ तुम् (व्रश्च..)
द्रष्+ टुम् (ष्टुत्वम्)
द्रष्टुम्

अव्ययम्

दृश्+ ण्वुल्
दर्श्+ वु (लघूपधगुणः)
दर्श्+ अक
दर्शकः

त्रिषु लिङ्गेषु प्रयोगः

{मूलपाठः}

❖ तुमुन्-ण्वुल्-प्रत्ययविधायकं विधिसूत्रम्—

सूत्रम्— तुमुँन्ण्वुलौ क्रियायां क्रियार्थायाम् (३,३.१०)

अर्थः— क्रियार्थायां क्रियायामुपपदे भविष्यत्यर्थे धातोरेतौ स्तः।

मान्तत्वादव्ययत्वम्।

कृष्णं द्रष्टुं याति। कृष्णं दर्शको याति॥

❖ तुमुन्-प्रत्ययविधायकं विधिसूत्रम्—

सूत्रम्— कालसमयवेलासु तुमुँन् (३,३.१६७)

अर्थः— कालार्थेषूपपदेषु तुमुँन्।

कालः समयो वेला वा भोक्तुम्॥



कृष्णं द्रष्टुम्



मीरा याति

- क्रियार्थायां क्रियायामुपपदे
- भविष्यत्यर्थे

उभयोः भिन्ने

भुज्+ तुम्
भोज्+ तुम् (लघूपधगुणः)
भोग्+ तुम् (चोः कुः)
भोक्+ तुम् (खरि च)= भोक्तुम्

# घञ्-प्रत्ययविधानम् (पुल्लिँङ्ग एव प्रयुज्यते)



'कृद्भिरभिहितो भावो द्रव्यवत् प्रकाशते' इति भाष्योक्त्या सिद्धभाववाचकः कृदन्तो द्रव्यधर्मान् लिङ्गसङ्ख्यादीन् गृह्णाति, अतो द्विवचनादिः। अत उक्तम्—

क्रियायाः सिद्धतावस्था साध्यावस्था च कीर्तिता।
सिद्धतां द्रव्यमिच्छन्ति तत्रैवेच्छन्ति घञ्विधिम्॥

विग्रहः— पचनम्।
पच्+ घञ्
पाच्+ अ (अत उपधाया)
पाक्+ अ (चजोः कुः घिण्ण्यतोः)
पाकः

रञ्जनम्। रज्यते अनेन
रञ्ज्+ घञ्
रज् + अ — रञ्ज् + अ
राग् + अ — रञ् ग् + अ
रागः — रङ्ग् + अ= रङ्गः

निचीयते धनादिकम्।
नि+चि+ अ
नि+कै+ अ
निकायः

निवसन्ति अत्र= निवासः
चीयते अस्मिन् अस्थ्यादिकम्= कायः

निचीयते राशीक्रियते= निकायः
गोमयानां निकायः=
गोमयनिकायः

{मूलपाठः}

❖ भावे घञ्-प्रत्ययविधायकं विधिसूत्रम्—

सूत्रम्— भावे (३,३.१८)

अर्थः— सिद्धावस्थापन्ने धात्वर्थे वाच्ये धातोर्घञ्। पाकः॥

❖ कर्तृभिन्न-कर्मकरणादिकारकेषु घञ्-प्रत्ययविधायकं विधिसूत्रम्—

सूत्रम्— अकर्तरि च कारके संज्ञायाम्॥ (३,३.१९)

अर्थः— कर्तृभिन्ने कारके घञ् स्यात्॥

❖ नकारलोपविधायकं विधिसूत्रम्—

सूत्रम्— घञि च भावकरणयोः (६,४.२७)

अर्थः— रञ्जेर्नलोपः स्यात्। रागः।

अनयोः किम्? रज्यत्यस्मिन्निति रङ्गः॥

❖ निवासाद्यर्थेषु घञ्-प्रत्यय-कादेशविधायकं विधिसूत्रम्—

सूत्रम्— निवास-चिति-शरीरोपसमाधानेष्वादेश्च कः (३,३.४१)

अर्थः— एषु चिनोतेर्घञ् आदेश्च ककारः।

उपसमाधानं= राशीकरणम्। निकायः। कायः। गोमयनिकायः॥

घञ्
घ्— लशक्वतद्धिते
ञ्— हलन्त्यम्
= अ

संस्कृतसारः
लिख्यते सर्वसंश्रयाः

भावे, अकर्तरि कारके सञ्ज्ञायाञ्च विषये

# अच्-अप्-कप्रत्ययविधानम् (पुल्लिँङ्गे)

लघुसिद्धान्तकौमुद्याम् (कृदन्ते उत्तरकृदन्तम्)

विग्रहः— चयनम्। चीयतेऽसौ।
विग्रहः— जयनम्। जयत्यनेन संसारम्।

| | |
|---|---|
| चि+ अच् | जि+ अच् |
| चे+ अ (सार्वधातु...) | जे+ अ |
| चयः | जयः |

1. करणम्। कीर्यते इति। कृ+ अप्= करः।
2. गरणम्। गीर्यते इति। गृ+ अप्= गरः।
3. यवनम्। यूयते इति। यु+ अप्= यवः।
4. लवनम्। लूयते इति। लू+ अप्= लवः।
5. स्तवनम्। स्तूयते इति। स्तु+ अप्= स्तवः।
6. पवनम्। पूयते इति। पू+ अप्= पवः।

❖ भावे, अकर्तरि कारके सञ्ज्ञायाम् अच्-प्रत्ययविधायकं विधिसूत्रम्—

सूत्रम्— एरच् (३,३.४६)

अर्थः— इवर्णान्तादच् (भावे, अकर्तरि कारके सञ्ज्ञायां च विषये।)

चयः। जयः॥

❖ भावे, अकर्तरि कारके सञ्ज्ञायां अप्-प्रत्ययविधायकं विधिसूत्रम्—

सूत्रम्— ॠदोरप् (३,३.५७)

अर्थः— ॠवर्णान्तादुवर्णान्ताच्चाप्। (भावे, अकर्तरि कारके सञ्ज्ञायां च विषये ।

करः। गरः। यवः। लवः। स्तवः। पवः।

❖ भावे, अकर्तरि कारके सञ्ज्ञायां अप्-प्रत्ययविधायकं वार्तिकम्—

वार्तिकम्— घञर्थे= भावे, अकर्तरि कारके कविधानम्।

प्रस्थः। विघ्नः॥

{मूलपाठः}

प्रतिष्ठन्ते अस्मिन् धान्यानि इति= प्रस्थः (प्र+ स्था+ क) आतो लोपः..
विहन्यते अस्मिन् इति=विघ्नः (वि+ हन्+ क) उपधालोपः कुत्वम्

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

भावे, अकर्तरि कारके सञ्ज्ञायाञ्च विषये

# त्रिमप्-अथुच्-प्रत्ययविधानम् (पुल्लिँङ्गे)

लघुसिद्धान्तकौमुद्याम् (कृदन्ते उत्तरकृदन्तम्)

विग्रहः— पाकेन निर्वृत्तम्=सिद्धम्।
विग्रहः— वापेन निर्वृत्तम्।

| | |
|---|---|
| पच्+ क्त्रि (चोः कुः) | वप्+ क्त्रि |
| पक्त्रि+ मप् | उप्त्रि+ मप् (सम्प्रसारणम्) |
| पक्त्रिमम् | उप्त्रिमम् (विशेष्यलिङ्गम्) |

**नव ड्वित् धातवः—**

ददातिश्च दधातिश्च मिनोतेर्लभिरित्यपि।
क्रीणातिश्च करोतिश्च बिभर्त्यथ पचिर्वपिः॥

विग्रहः— वेपनम्।
वेप्+ अथुच्
वेपथुः

**{मूलपाठः}**

❖ भावे, अकर्तरि कारके सञ्ज्ञायां क्त्रि-प्रत्ययविधायकं विधिसूत्रम्—

**सूत्रम्— ड्वितः क्त्रिः (३,३.८८)**

**अर्थः—** ‘डु’इत् यस्य धातोः तस्माद्धातोः ‘क्त्रि’ प्रत्ययः स्यात् । भावे, अकर्तरि कारके सञ्ज्ञायां च विषये ।

❖ भावे, अकर्तरि कारके सञ्ज्ञायां मप्-प्रत्ययविधायकं विधिसूत्रम्—

**सूत्रम्— क्त्रेर्मम्नित्यम् (४,४.२०)**

**अर्थः—** क्त्रिप्रत्ययान्तात्मप् निर्वृत्तेऽर्थे ।

पाकेन निर्वृत्तम्— पक्त्रिमम् । डुवप्— उप्त्रिमम्॥

❖ भावे, अकर्तरि कारके सञ्ज्ञायाम् अथुच्-प्रत्ययविधायकं विधिसूत्रम्—

**सूत्रम्— ट्वितोऽथुच् (३,३.८९)**

**अर्थः—** ‘टु’इत् यस्य धातोः तस्माद्धातोः ‘अथुच्’ प्रत्ययः स्यात् । भावे, अकर्तरि कारके सञ्ज्ञायां च विषये ।

टुवेपृँ कम्पने— वेपथुः॥

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

## भावे, अकर्तरि कारके सञ्ज्ञायाञ्च विषये
# नङ्-नन्-कि-प्रत्ययविधानम् (पुल्लिँङ्गे)

लघुसिद्धान्तकौमुद्याम् (कृदन्ते उत्तरकृदन्तम्)

विग्रहः— यजनम्। इज्यते इति।
यज्+ नङ्
यज्+ न
यज्+ ञ
यज्ञः

विग्रहः— यजनम्। इज्यते इति।
प्र+धा+ कि
प्र+धा+ इ
प्र+ध्+ इ (आतो लोप इटि च)
प्रधिः

{मूलपाठः}

❖ भावे, अकर्तरि कारके सञ्ज्ञायां नङ्-प्रत्ययविधायकं विधिसूत्रम्—

सूत्रम्— यज-याच-यत-विच्छ-प्रच्छ-रक्षो नङ् (३,३.९०)

अर्थः— भावे, अकर्तरि कारके सञ्ज्ञायां च विषये एभ्यः 'नङ्' प्रत्ययः स्यात्।

यज्ञः। याच्ञा। यत्नः। विश्नः। प्रश्नः। रक्ष्णः॥

❖ भावे, अकर्तरि कारके सञ्ज्ञायां नन्-प्रत्ययविधायकं विधिसूत्रम्—

सूत्रम्— स्वपो नन् (३,३.९१)

स्वप्नः॥

❖ भावे, अकर्तरि कारके सञ्ज्ञायाम् कि-प्रत्ययविधायकं विधिसूत्रम्—

सूत्रम्— उपसर्गे घोः किः (३,३.९२)

अर्थः— भावे, अकर्तरि कारके सञ्ज्ञायां च विषये उपसर्गे उपपदे घुसञ्ज्ञकेभ्यः धातुभ्यः 'कि'प्रत्ययः स्यात्।

प्रधिः। उपधिः॥

संस्कृतसारः छिद्यन्ते सर्वसंशयाः

## भावे, अकर्तरि कारके सञ्ज्ञायाञ्च विषये
# (स्त्रीलिङ्गे) क्तिन्-क्विँप्-प्रत्ययविधानम्



विग्रहः— करणम्।

कृ+ क्तिन्
कृ+ ति
कृतिः

विग्रहः—स्तवनम्।

स्तु+ क्तिन्
स्तु+ ति
स्तुतिः

कॄ+ क्तिन्
कॄ+ ति
किर्+ ति
कीर्+ ति
कीर्+ नि
कीर्णिः

सम्+पद्+ क्विँप्
सम्पत्-द्

सम्+पद्+ क्तिन्
सम्पद्+ ति
सम्पत्+ ति
सम्पत्तिः

❖ भावे, अकर्तरि कारके सञ्ज्ञायां क्तिन्-प्रत्ययविधायकं विधिसूत्रम्—

सूत्रम्— स्त्रियां क्तिन् (३,३.९४)

अर्थः— स्त्रीलिङ्गे भावे क्तिन् स्यात्। घञोऽपवादः। कृतिः। स्तुतिः।

❖ क्तिनः निष्ठावद् अतिदेष्टुं वार्तिकम्—

वार्तिकम्— ॠल्वादिभ्यः क्तिन्निष्ठावद्वाच्यः।

अर्थः— ॠकारान्तेभ्यो ल्वादिभ्यश्च परः क्तिन् निष्ठा सदृशं कार्यं लभते।

तेन नत्वम्— कीर्णिः। लूनिः। धूनिः। ~~पूनिः।~~[१]

❖ भावे, अकर्तरि कारके सञ्ज्ञायां क्विँप्-प्रत्ययविधायकं वार्तिकम्—

वार्तिकम्— सम्पदादिभ्यः क्विँप्।

सम्पत्। विपत्। आपत्। क्तिन्नपीष्यते[२]— सम्पत्तिः। विपत्तिः। आपत्तिः

{मूलपाठः}

१.अस्य पाठो चिन्त्यः। २.नेदं वार्तिकम्।

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

भावे, अकर्तरि कारके सञ्ज्ञायाञ्च विषये

# (स्त्रीलिङ्गे) विविधनिपातनम्

लघुसिद्धान्तकौमुद्याम् (कृदन्ते उत्तरकृदन्तम्)

अवँ रक्षण...
अव्+ क्तिन्
अव्+ ति
ऊठ्+ ति
ऊतिः=रक्षा

यु मिश्रणामिश्रणयोः= यूतिः।
जु गतौ सौत्रधातुः= जूतिः।
षो अन्तकर्मणि= सातिः।
हि गतौ = हेतिः= अस्त्रम्।
कृत संशब्दने= कीर्तिः।

{मूलपाठः}

❖ ऊतीत्यादि निपातनार्थं विधिसूत्रम्—
सूत्रम्— ऊति-यूति-जूति-साति-हेति-कीर्तयश्च (३,३.९७)
अर्थः— एते (क्तिनन्ताः) निपात्यन्ते॥

❖ ऊठादेशविधायकं विधिसूत्रम्—
सूत्रम्— ज्वर-त्वर-स्रिव्यवि-मवामुपधायाश्च (६,४.२०)
अर्थः—एषामुपधावकारयोरूठ् अनुनासिके, क्वौ ,झलादौ क्ङिति॥
अतः क्विँप्— जूः। तूः। स्रूः। ऊः। मूः॥

❖ इच्छा-शब्दस्य निपातनार्थं विधिसूत्रम्—
सूत्रम्— इच्छा (३,३.१०१)
अर्थः— इषेर्निपातोऽयम्॥ (इषेर्भावे षप्रत्ययो यगभावश्च निपात्यते।)

ज्वर्+ क्विँप्
ज्वर्
ज् ऊठ् र्
जूर्
जूः

❖ त्वर्— तूः= वेगः।
❖ स्रिव्— स्रूः= गमनम्।
❖ अव्— ऊः= रक्षणम्।
❖ मव्— मूः= बन्धनम्।

अव्+ मन् (अवतेष्टिलोपश्च)
अव्+ म
ऊठ्+ म (ज्वर-त्वर.....)
ओ+ म (सार्वधातुकार्धातुकयोः)

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

भावे, अकर्तरि कारके सञ्ज्ञायाञ्च विषये

# (स्त्रीलिङ्गे) अ-युच्-प्रत्ययविधानम्

लघुसिद्धान्तकौमुद्याम्
(कृदन्ते उत्तरकृदन्तम्)

❖ कर्तुम् इच्छा

कृ+ सन्= चिकीर्ष
चिकीर्ष+ अ
चिकीर्ष्+ अ (अतो लोपः)
चिकीर्ष + टाप्
चिकीर्ष + आ
चिकीर्षा+स्
चिकीर्षा

❖ आत्मनः पुत्रस्यैषणम्।

पुत्र+ काम्यच्= पुत्रकाम्य
पुत्रकाम्य+ अ
पुत्रकाम्य्+ अ
पुत्रकाम्य + टाप्
पुत्रकाम्य + आ
पुत्रकाम्या+स्
पुत्रकाम्या

ईह्+ अ= ईह
ईह्+ टाप्
ईहा+ स्
ईहा

कृधातोर्णिच्= कारि
हृधातोर्णिच्= हारि
कारि+ युच्
कार्+ अन+टाप्= कारणा

{मूलपाठः}

❖ 'अ'प्रत्ययविधायकं विधिसूत्रम्—

सूत्रम्— अ प्रत्ययात् (३,३.१०२)

अर्थः— प्रत्ययान्तेभ्यो = सनाद्यन्तेभ्यः धातुभ्यः स्त्रियामकारः प्रत्ययः स्यात्। चिकीर्षा। पुत्रकाम्या॥

❖ 'अ'प्रत्ययविधायकं विधिसूत्रम्—

सूत्रम्— गुरोश्च हलः (३,३.१०३)

अर्थः—गुरुमतो हलन्तात्स्त्रियामकारः प्रत्ययः स्यात्। ईहा॥

❖ 'युच्'प्रत्ययविधायकं विधिसूत्रम्—

सूत्रम्— ण्यास-श्रन्थो युच् (३,३.१०७)

अर्थः— ण्यन्तेभ्यः आस्-श्रन्थाभ्यां च युच् स्यात्। अकारस्यापवादः। कारणा। हारणा॥

णेरनिटि
युवोरनाकौ

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

भावे, कालसामान्ये

# (नपुंसकलिङ्गे) क्त-ल्युट्-प्रत्ययविधानम्



❖ हासम्

हस्+ क्त

हस्+ त

हस्+ त (आर्धातुकस्येड्वलादेः)

हस् + इट् त

हसितम्

अकर्मकधातुभ्यः क्तप्रत्ययः भवति इति भाष्यकैयटयोः।

❖ 'क्त'प्रत्ययविधायकं विधिसूत्रम्— {मूलपाठः}

सूत्रम्— नपुंसके भावे क्तः (३,३.११)

अर्थः— क्लीबत्वविशिष्टे भावे कालसामान्ये 'क्तः' स्यात्।

❖ 'ल्युट्'प्रत्ययविधायकं विधिसूत्रम्—

सूत्रम्— ल्युट् च (३,३.११५)

अर्थः— क्लीबत्वविशिष्टे भावे कालसामान्ये 'ल्युट्' स्यात्।

हसितम्, हसनम्॥

हस्+ ल्युट्

हस्+ यु

हस्+ अन

हसनम्

क्तप्रत्यये परतः धातोः पूर्वप्रतिपादितानि निष्ठाप्रयुक्तकार्याणि भवन्ति— गतम्,स्थितम्,भुक्तम्।

ल्युट्प्रत्ययस्यार्धधातुकत्वाद् धातोः गुणकार्यं तथा धात्वादेशाः भवन्त्येव— श्रवणम्, नयनम्,वचनम्।

कृत्संज्ञकल्युडन्तप्रयोगे कर्तरि कर्मणि च षष्ठी भवति। कर्तरि— शिशोः क्रन्दनम्। कर्मणि— अन्नस्य भक्षणम्

वाक्ये कर्तृकर्मवाचक-उभयोः पदप्रयोगे तु कर्मण्येव षष्ठी। यथा— यज्ञदत्तेन **जलस्य** पानं न मे रोचते।

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# पुंसि संज्ञायां करणाधिकरणयोः प्रायेण
# घ-घञ्-प्रत्ययविधानम्

लघुसिद्धान्तकौमुद्याम्
(कृदन्ते उत्तरकृदन्तम्)

❖ दन्ताश्छाद्यतेऽनेन (ओष्ठौ)
दन्त+आम्+छादि+ घ
दन्त+आम्+छाद्+ अ
दन्त+आम्+छद्+ अ+स्
दन्तानां छदः (ओष्ठौ)
दन्त + छद
दन्त तुक् + छद
दन्त त् + छद
दन्तच्छदः

आ+कृ+ घ
आ+कर्+ अ
आकरः (खान)

अवतीर्यते अनेन (पर्दा)
अव+स्तॄ+ घञ्
अव+स्त् आर+ अ
अवस्तारः

अवतरन्ति अनेन (नदी/ कूपस्य घट्टः)
अव+तॄ+ घञ्
अव+त् आर+ अ= अवतारः

{मूलपाठः}

❖ 'घ'प्रत्ययविधायकं विधिसूत्रम्—
सूत्रम्— पुंसि संज्ञायां घः प्रायेण (३,३.११८)
अर्थः— पुल्लिँङ्गयोः करणाधिकरणयोः अभिधेययोः धातोर्घः प्रत्ययः स्यात्, समुदायेन चेत् सञ्ज्ञा गम्यते।
'ह्रस्व'विधायकं विधिसूत्रम्—
सूत्रम्— छादेर्घेऽद्व्युपसर्गस्य (६,४.९६)
अर्थः— द्विप्रभृत्युपसर्गहीनस्य छादेर्ह्रस्वो घे परे।
दन्ताश्छाद्यन्तेऽनेनेति दन्तच्छदः। आकुर्वन्त्यस्मिन्नित्याकरः॥
'घञ्'प्रत्ययविधायकं विधिसूत्रम्—
सूत्रम्— अवे तॄस्त्रोर्घञ् (३,३.१२०)
अर्थः— पुल्लिँङ्गयोः करणाधिकरणयोः अभिधेययोः 'अव' इत्युपसर्गे उपपदे 'तॄ-स्तॄ' इति धातुभ्यां 'घञ्'प्रत्ययः स्यात्, समुदायेन चेत् सञ्ज्ञा गम्यते। अवतारः कूपादेः। अवस्तारो जवनिका॥

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# पुंसि संज्ञायां करणाधिकरणयोः प्रायेण
# घञ्-प्रत्ययविधानम्

लघुसिद्धान्तकौमुद्याम्
(कृदन्ते उत्तरकृदन्तम्)

अधिकरणे— रमन्ते योगिनोऽस्मिन्निति

रम्+ घञ्

राम्+ अ

रामः

करणे— अपमृज्यतेऽनेन व्याधिः।

अप+मृज्+ घञ्

अप+मार्ज्+ घञ्

अपा+मार्ज्+ अ (उपसर्गस्य घञ्यमनुष्ये बहुलम्)

अपा+मार्ग्+ अ (चजोः कुः घिण्यतोः)

अपामार्गः

{मूलपाठः}

'घञ्'प्रत्ययविधायकं विधिसूत्रम्—

सूत्रम्— हलश्च (३,३.१२१)

अर्थः— पुल्लिँङ्गयोः करणाधिकरणयोः अभिधेययोः हलन्तादघञ् स्यात् समुदायेन चेत् सञ्ज्ञा गम्यते।।

घापवादः। रमन्ते योगिनोऽस्मिन्निति— रामः। अपमृज्यतेऽनेन व्याध्यादिरिति— अपामार्गः॥

# भावे कर्मणि च
# खल्-प्रत्ययविधानम्



{मूलपाठः}

❖ 'खल्'प्रत्ययविधायकं विधिसूत्रम्—

सूत्रम्— ईषद्-दुस्-सुषु कृच्छ्राकृच्छ्रार्थेषु खल् (३,३.१२६)

अर्थः— करणाधिकरणयोरिति निवृत्तम्। एषु= ईषद्-दुस्-सुषु दुःखसुखार्थेषूपपदेषु खल्। तयोरेवेति भावे कर्मणि च।

कृच्छ्रे — दुष्करः कटो भवता।

अकृच्छ्रे — ईषत्करः। सुकरः॥

कृ (सकर्मकः) दुःखेन क्रियते। कर्मणि प्रत्ययः।

दुस्+कृ+ खल्

दुस्+कर्+ अ

(सार्वधातुकार्धधातुकयोः, उपपदमतिङ्, इदुदुपधस्य चाप्रत्ययस्य)

दुष्करः कटो भवता

कटो ↓ कर्म

भवता ↓ कर्ता

ईषत्+कृ+ खल्= ईषत्करः

सु+कृ+ खल्= सुकरः

ईषद् दुस् सु + धातोः + खल् (अ)

✓ कृच्छ्रार्थे= दुःखे

✓ अकृच्छ्रार्थे= सुखे

# भावे कर्मणि च
# युच्प्रत्ययविधानम्



पा पाने (सकर्मकः) ईषत् पीयते। कर्मणि प्रत्ययः।

ईषत्+पा+ युच्

ईषत्+पा+ अन (युवोरनाकौ)

ईषत्पानः सोमो भवता

सोमो ↓ कर्म, भवता ↓ कर्ता

{मूलपाठः}

❖ 'युच्'प्रत्ययविधायकं विधिसूत्रम्—

सूत्रम्— आतो युच् (३,३.१२८)

अर्थः— खलोऽपवादः।

दुःख-सुखार्थयोः ईषद्-दुस्-सूपपदेषु आदन्ताद् धातोर्युच् स्यात्।

ईषत्पानः सोमो भवता। दुष्पानः। सुपानः॥

ईषद्
दुस्
सु

+ आदन्त-धातोः

युच्

✓ कृच्छ्रार्थे
✓ अकृच्छ्रार्थे

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# भावे 'क्त्वा'प्रत्ययविधानम्- १



'क्त्वा-तोसुन्-कसुनः'इति सूत्रेण क्त्वा-प्रत्ययान्ताः अव्ययानि भवन्ति। 'अव्ययकृतो भावे' इति भाष्यनियमेन अव्ययसञ्ज्ञक-कृत्प्रत्ययाः भावे भवन्ति।

❖ अलं (निषेधार्थकः) अपात्रे न देयम्।

अलम्+दा+ क्त्वा

अलम्+दथ्+ त्वा (दो दद्घोः)

अलम्+दत्+ त्वा (खरि च)

अलम्+दत्त्वा (अमैवाव्ययेन— समासनिषेधः)

अलं दत्त्वा (दत्त्वाऽलम्)

❖ खलु (निषेधार्थकः)

खलु+पा+ क्त्वा

खलु+पी+ त्वा (घुमास्था..)

(खलु पीत्वा) पीत्वा खलु

❖ 'क्त्वा'प्रत्ययविधायकं विधिसूत्रम्— {मूलपाठः}

**सूत्रम्— अलंखल्वोः प्रतिषेधयोः प्राचां क्त्वा** (३,४.१८)

**अर्थः—** प्रतिषेधार्थयोरलंखल्वोरुपपदयोः क्त्वा स्यात्।

❖ प्राचां ग्रहणं पूजार्थम्।

❖ 'अमैवाव्ययेन'ति नियमान्नोपपदसमासः।

❖ 'दो दद्घोः'— अलं दत्त्वा।

❖ 'घुमास्थे..'तीत्त्वम्— पीत्वा खलु।

❖ अलंखल्वोः किम्? मा कार्षीत्।

❖ प्रतिषेधयोः किम्? अलंकारः॥

अलङ्करणम्= अलङ्कारः इत्यत्र भावे घञ्। अलमिति भूषणार्थे।

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# भावे 'क्त्वा'प्रत्ययविधानम्- २



भुज्+ क्त्वा
भुग्+ त्वा (चोः कुः— कुत्वम्)
भुक्+ त्वा (खरि च— चर्त्वम्)
भुक्त्वा (व्रजति)
पूर्वकालिकी उत्तरकालिकी



❖ 'क्त्वा'प्रत्ययविधायकं विधिसूत्रम्— {मूलपाठः}

**सूत्रम्**— समानकर्तृकयोः पूर्वकाले (३,४.२१)

**अर्थः**— समानकर्तृकयोर्धात्वर्थयोः पूर्वकाले विद्यमानाद्धातोः क्त्वा स्यात्।

❖ भुक्त्वा व्रजति।

❖ द्वित्वमतन्त्रम्—' भुक्त्वा पीत्वा व्रजति॥

'समानकर्तृकयोः' इत्यत्र द्वित्वम् अविवक्षितम्। तेन बहूनां समानकर्तृकाणां क्रियाणां सत्वेऽपि पूर्वकालिकक्रियावृत्तेर्धातोः क्त्वा भवति।

# ‘क्त्वा’प्रत्यये अकिद्वद्विवेचनम्

लघुसिद्धान्तकौमुद्याम्
(कृदन्ते उत्तरकृदन्तम्)




कित् वा, कित् वा

शी+ क्त्वा
(अकित्वात् ‘क्क्ङिति च’ इति न प्रवर्तते। तेन गुणादिकार्याणि।)
शे+ इ त्वा
श् अय्+ इ त्वा=
शयित्वा

❖ वैकल्पिक‘इड्’विधायकं विधिसूत्रम्—

सूत्रम्— उदितो वा (७,२.५६)

अर्थः—उदितः परस्य क्त्व इड् वा।

- शमित्वा, शान्त्वा। देवित्वा, द्यूत्वा।
- ○ दधातेर्हिः— हित्वा॥

❖ ‘हि’आदेशविधायकं विधिसूत्रम्—

सूत्रम्— जहातेश्च क्त्वि (७,४.४३)

अर्थः—ओहाक् त्यागे इति धातोः क्त्वा प्रत्यये ‘हि’आदेशो भवति।

- हित्वा।
- हाङस्तु – हात्वा॥

{मूलपाठः}

❖ कितोऽकिद्विधायकमतिदेशसूत्रम्—

{मूलपाठः}

सूत्रम्— न क्त्वा सेट् (१,२.१८)

अर्थः— सेट् क्त्वा किन्न स्यात्।

- शयित्वा।
- सेट् किम्? कृत्वा॥

❖ विकल्पेन कित्वार्थ विधिसूत्रम्—

सूत्रम्— रलो व्युपधाद्धलादेः संश्च (१,२.२६)

अर्थः— इवर्णोवर्णोपधाद्धलादेः रलन्तात्परौ क्त्वासनौ सेटौ वा कितौ स्तः।

- द्युतित्वा, द्योतित्वा। लिखित्वा, लेखित्वा।
- व्युपधात्किम्? वर्तित्वा।
- रलः किम्? सेवित्वा।
- हलादेः किम्? एषित्वा।
- सेट् किम्? भुक्त्वा॥

# भावे क्त्वास्थानिकस्य ‘ल्यप्’प्रत्ययविधानम्



क्त्वाप्रत्ययस्य आदेशरूपेण ल्यप्-(य)प्रत्ययस्य विधानमस्ति। क्त्वाप्रत्ययगतं कित्वमार्धधातुकत्वञ्च ‘स्थानिवत्’सूत्रेणातिदिश्यते। किन्तु वलादित्वम् अल्विधित्वात् नातिदिश्यते। तेन ल्यपि परत इडागमो न। अथ च ल्यबन्तानाम् अव्ययत्वमपि सिद्ध्यति।




{मूलपाठः}

❖ ‘ल्यप्’प्रत्ययविधायकं विधिसूत्रम्—

**सूत्रम्— समासेऽनञ्पूर्वे क्त्वो ल्यप् (७,१.३७)**

**अर्थः—** अव्ययपूर्वपदेऽनञ्समासे क्त्वो ल्यबादेशः स्यात्।

- तुँक्— प्रकृत्य।
- अनञ् किम् ? अकृत्वा॥

कृ+ क्त्वा= कृत्वा
प्र+ कृत्वा (कुगतिप्रादयः)
प्रकृ+ ल्यप् (समासेऽनञ्पूर्वे क्त्वो ल्यप्)
प्रकृ तुँक्+ य (ह्रस्वस्य पिति कृति तुँक्)
प्रकृत्य

❖ न कृत्वा
न+ कृत्वा (नञ्)
अ+ कृत्वा (नलोपो नञः)
अकृत्वा

अनादृत्य, अनागत्य, असमीक्ष्य, अनधिकृत्य इत्यादिषु नञ्समासात्पूर्वं प्रादिसमासो भवति तस्माल् ल्यप् भवत्येव।

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# भावे 'णमुँल्'प्रत्ययविधानम्

लघुसिद्धान्तकौमुद्याम्
(कृदन्ते उत्तरकृदन्तम्)

'अव्ययकृतो भावे' इति भाष्यनियमेन अव्ययसञ्ज्ञक-कृत्प्रत्ययाः भावे भवन्ति। तेन 'कृन्मेजन्तः'इति सूत्रेण अयं णमुँल् (अम्) प्रत्ययः कृन्मान्तत्वादव्ययसञ्ज्ञकोऽस्ति।

❖ वीप्सा— गुणेन क्रियया वा नैकान् पदार्थान् व्याप्तं कृत्वा युगपत् वक्तुमिच्छा।

स्मृ+ णमुँल्
स्म् आर्+ अम्
स्मारम्
स्मारं स्मारं नमति शिवम्।

पा+ णमुँल्
पा युँक्+ अम्
(आतो युँक् चिण्कृतोः)
पायं पायम्

भुज्+ णमुँल्
भोज्+ अम्
भोजं भोजम्

श्रु+ णमुँल्
श्रौ+ अम्
श्र् आव्+ अम्
श्रावं श्रावम्

{मूलपाठः}

❖ 'णमुँल्'प्रत्ययविधायकं विधिसूत्रम्—

**सूत्रम्— आभीक्ष्ण्ये णमुँल् च (३,४.२२)**

अर्थः— आभीक्ष्ण्ये= पौनःपुन्ये द्योत्ये पूर्वविषये= समानकर्तृकयोर्धात्वर्थयोः पूर्वकालिकक्रियावृत्तेर्धातोः णमुँल् स्यात् क्त्वा च॥

❖ 'द्वित्व'विधायकं विधिसूत्रम्—

**सूत्रम्— नित्यवीप्सयोः (८,१.४)**

अर्थः— आभीक्ष्ण्ये वीप्सायां च द्योत्ये पदस्य द्वित्वं स्यात्।

- आभीक्ष्ण्यं तिङन्तेष्वव्ययसञ्ज्ञकेषु च कृदन्तेषु च।
- स्मारं स्मारं नमति शिवम्। स्मृत्वा स्मृत्वा।
- पायम्पायम्। (काव्यरसं नन्दन्ति रसिकाः)
- भोजम्भोजम्। (परान्नं प्रसीदति कृपणः)
- श्रावं श्रावम्॥ (हरिकथां तुष्यन्ति सन्तः)

# भावे 'णमुँल्'प्रत्ययविधानम्



❖ यो ह्यर्थः 'अन्यथा भुङ्क्ते' इति वाक्यतः प्रतीयते, स एवार्थः 'अन्यथाकारं भुङ्क्ते' इति वाक्यादपि प्रतीयते तस्मात् 'कृञ्' निरर्थकः।

❖ शिरोऽन्यथा कृत्वा भुङ्क्ते= शिर को दूसरी तरफ करके भोजन करता है।

अन्यथा+कृ+ णमुँल्
अन्यथा+क् आर्+ अम्
**अन्यथाकारम्**
एवम्+ कारम्
कथम् + कारम्
इत्थम् + कारम्

❖ 'णमुँल्'प्रत्ययविधायकं विधिसूत्रम्—

{मूलपाठः}

**सूत्रम्— अन्यथैवंकथमित्थंसु सिद्धाप्रयोगश्चेत् (३,४.२७)**

**अर्थः—** एषु= अन्यथा, एवम्, कथम्, इत्थम् कृञो णमुँल् स्यात्।
सिद्धोऽप्रयोगो (प्रयोगाभावः) -ऽस्य एवम्भूतश्चेत् कृञ्।

- व्यर्थत्वात्प्रयोगानर्ह इत्यर्थः।
- अन्यथाकारम्।
- एवङ्कारम्।
- कथङ्कारम्।
- इत्थङ्कारं भुङ्क्ते।
- सिद्धेति किम्? शिरोऽन्यथा कृत्वा भुङ्क्ते॥

॥ इत्युत्तरकृदन्तम्॥

॥ इति कृदन्तम्॥

**१. 'णमुँल्'प्रत्ययविषये इदं कथनमसङ्गतम्–**

क. पौनःपुन्यार्थे भवति।

**ख. णमुँलन्तानि पदानि पुँल्लिङ्गे भवन्ति।**

ग. समानकर्तृकयोर्धात्वर्थयोः पूर्वकालिकक्रियावृत्तेर्धातोर्भवति

घ. आभीक्ष्ण्ये द्योत्ये पदस्य द्वित्वं भवति।

**२. 'कारुः' इत्यत्र प्रकृति-प्रत्ययो भवति—**

क. कृञ् + उ

**ख. कृ + उण्**

ग. कार् +ऊ

घ. कृ + ऊण्

**३. 'ण्वुलः' णकारस्य केन सूत्रेण इत्सञ्ज्ञा भवति ?**

क. हलन्त्यम्

ख. आदिर्ञिटुडवः

**ग. चुटू**

घ. तस्य लोपः

**४. 'तुमुँण्ण्वुलौ' अत्र अव्ययसञ्ज्ञा भवति —**

क. ण्वुलः

**ख.तुमुँनः**

ग. उभयोः

घ. कस्यापि न

**५. 'तुमुँण्ण्वुलौ' कस्मिन् काले भवतः ?**

क. भूतकाले

ख. वर्तमानकाले

**ग. भविष्यत्काले**

घ. अनद्यतने

**६. 'विघ्नः' अत्र कः प्रत्ययः?**

क. अच्

ख. घञ्

**ग. क**

घ. अप्

**७. 'अच्प्रत्ययो भवति–**

**क.इवर्णान्त-धातोः**

ख. उवर्णान्त-धातोः

ग. ऋवर्णान्त-धातोः

घ. ऌवर्णान्त-धातोः

**८. 'पक्त्रिमम्' अत्र प्रकृति-प्रत्ययो भवति—**

क. पक्त्रिम् + अम्

ख. पक्त्रिम् + मम्

**ग. पक्त्रि+ मप्**

घ. पक्त्रि + मम्

**९. 'करः' इत्यत्र को धातुः?**

**क.कृ विक्षेपे**

ख. डुकृञ् करणे

ग. डुक्रीञ् द्रव्यविनिमये

घ. कुङ् शब्दे

**१०. अचपौ प्रत्ययौ कस्मिन्नर्थे भवतः ?**

क. भावे

ख. कर्मणि

ग. कर्तरि

**घ. भावे अकर्तरि कारके सञ्ज्ञायाञ्च विषये**

**११. 'अथुच्' इति प्रत्ययः केभ्यः धातुभ्यः भवति—**

क. ड्वितधातुभ्यः

ख. ऋवर्णान्तधातुभ्यः

**ग. ट्वितधातुभ्यः**

घ. यज-याच-यत-विच्छादिधातुभ्यः

**१२. 'प्रश्नः' इत्यत्र कः प्रत्ययः ?**

**क. नङ्**

ख. नञ्

ग. नन्

घ. क्तिन्

**१३. 'धूनिः' इत्यत्र कः प्रत्ययः?**

क. नि

ख. ऊनि

ग. उनि

**घ. क्तिन्**

**१४. 'विपत्' इति कस्मिन् लिङ्गे ?**

**क. स्त्रीलिङ्गे**

ख. पुँल्लिङ्गे

ग. नपुंसकलिङ्गे

घ. अव्ययम्

**१५. 'ज्वर-त्वर-स्रिव्यवि-मवामुपधायाश्च' अनेन सूत्रेण किं विधीयते—**

क. क्विँप्

ख. अनुनासिकत्वम्

ग. अच्प्रत्ययः

घ. ऊठ्

**१६. 'अ'प्रत्ययस्य विधानमस्ति—**

क. अवर्णान्तधातुभ्यः

ख. भ्वादिगणपठितौपदेशिकधातुभ्यः

**ग. प्रत्ययान्तधातुभ्यः**

घ. अदादिधातुभ्यः

**१७. एभ्यः धातुभ्यः 'युच्'प्रत्ययो न भवति—**

क. ण्यन्तेभ्यः

ख. अस्-धातोः

ग. आस्-धातोः

घ. श्रन्थ्-धातोः

**१८. 'भावे' ल्युटि कृते ल्युडन्तेभ्यःकिं लिङ्गं भवति—**

क. स्त्रीलिङ्गम्

ख. पुँल्लिङ्गम्

**ग. नपुंसकलिङ्गम्**

घ. अव्ययम्

**१९. 'दन्तच्छदः' इति कस्य सञ्ज्ञा —**

क. छत्रस्य

ख. ओष्ठयोः

ग. दन्तानाम्

घ. मुखावरण-वस्त्रस्य

**२०. 'अपामार्गः' इत्यत्र घञ्प्रत्ययः कस्मिन्नर्थे—**

**क. करणे**

ख. अधिकरणे

ग. भावे

घ. कर्मणि

**२१. एषु खल्प्रत्ययः कुत्र—**

क. गरः

ख. करः

**ग. सुकरः**

घ. रागः

**२२. 'अलंकारः' इत्यत्र क्त्वा कथं न भवति—**

क. 'अलम्' इत्यस्य प्रतिषेधार्थकत्वात्।

ख. समासत्वात्

**ग. 'अलम्' इत्यस्य भूषणार्थकत्वात्।**

घ. 'अलम्' इत्यस्य उपपदत्वाभावात्।

**२३. 'देवदत्तो भुक्त्वा व्रजति' इत्यत्र क्त्वा भवति—**

**क. पूर्वकालिकक्रियातः**

ख. उत्तरकालिकक्रियातः

ग. पूर्वोत्तरकालिकक्रियातः

घ. कर्तृपदात्

**२४. 'रलो व्युपधाद्धलादेः संश्च' इति सूत्रे धातोः विशेषणानि कानि—**

क. 'रल्'प्रत्याहारान्तधातुः

ख. इ/उवर्णोपधः धातुः

ग. हलादिः धातुः

**घ. सर्वाणि**

**२५. एतेष्वशुद्धं चिनुत—**

क. प्रकृत्य

ख. अगत्वा

**ग. स्मृत्य**

घ. अनागत्य